तुष्टेर्न किंचित्परतः सुसम्यक्परितिष्ठति ॥ २
यदा संहरते कामान्कूर्मोऽङ्गानीव सर्वशः ।
तदात्मज्योतिरात्मैव स्वात्मनैव प्रसीदति ॥ ३
न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
कामद्वेषौ च जयति तदात्मानं प्रपश्यति ॥ ४
यदासौ सर्वभूतानां न क्रुध्यति न दुष्यति ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ५
एवं कौन्तेय भूतानि तं तं धर्मं तथा तथा ।
तदा तदा प्रपश्यन्ति तस्माद्बुध्यस्व भारत ॥ ६
अन्ये शमं प्रशंसन्ति व्यायाममपरे तथा ।
नैकं न चापरं केचिदुभयं च तथापरे ॥ ७
यज्ञमेके प्रशंसन्ति संन्यासमपरे जनाः ।
दानमेके प्रशंसन्ति केचिदेव प्रतिग्रहम् ।
केचित्सर्वं परित्यज्य तूष्णीं ध्यायन्त आसते ॥ ८
राज्यमेके प्रशंसन्ति सर्वेषां परिपालनम् ।
हत्वा भित्त्वा च छित्त्वा च केचिदेकान्तशीलिनः ॥ ९

---

G1 कष्टेन, G2 तुष्टौ तु T2 G1 सम्यक् (for किंचित्) — $^{d}$) K2 3 5 V1 B D सा (for सु) D8 सर्व्यं (for सम्यक्) K (except K1) Bo 2-5 Dn D2-8 S प्रति (D4 उप) (for परि)

3 = B 12 174 51 $3^{ab}$ = (var) 6 24 $58^{ab}$ — $^{a}$) Bo Da1 काम — $^{b}$) G1 कूर्मोंगानिव B1 सर्वत — $^{c}$) D2 तदास्यज्योतिर् (sic) K2 V1 Da Dn D6 8 अचिराद्, B2 आत्मा च, D1 आत्मेव, D7 आत्मातिर्; T1 G3 4 M1 3 4 आत्मरतिर् (hypermetric), G2 आत्माग्निर्, M2 आत्मेति (for आत्मैव) T2 G1 तदात्म ज्योतिषेवात्मा — $^{d}$) K2-5 V1 B1 3 4 Da Dn D2 3 5 6 8 स्वात्मन्येव, Bo 2 5 D7 S आत्मन्येव, D1 4 स्वात्मनेव (for °नैव)

4 $4^{ab}$ = B 12 174 $4^{ab}$ — $^{a}$) D1 चिंतेति (for बिभेति) Da चाप, D1 चायों, D7 चादौ, S चासौ (for चाय) — $^{b}$) D1 बिद्यति (for बिभ्यति) Da2 यदा चास्मा भविष्यति — $^{c}$) M2 यजति (for जयति) — $^{d}$) Ś1 K1 स, K6 D8 च (for प्र)

5 $^{a}$) V1 T2 सर्वभूतानि — $^{b}$) K3 5 V1 B Da Dn D2 3 5-8 T1 G2-4 M द्रुह्यति, D4 corrupt, T2 G1 मुह्यति (for क्रुध्यति) K2 4 5 D1 G2 तुष्यति; B Dn D2 3 5 6 कांक्षति, D4 दुशति; D7 T G1 M हृष्यति (for दुष्यति) — $5^{cd}$ = B 12 174 $54^{cd}$

6 $^{a}$) D8 सर्वे (sic) (for एव) D7 S (except G2) भूतानां Da1 एव भूतेय कौंतेय (sic) — $^{b}$) Bo 4 5 D2 3 5 तत्तत्कर्म, T G1 M2-4 तत्तद्धर्मं — $^{c}$) K3 5 B Dn D2 3 5 6 त(Bo य)दात्मना (for तदा तदा) V1 Da D4 7 8 S प्रशसति (for प्रपश्यन्ति) — T2 G1 om. (hapl.) $6^{d}$–$8^{e}$ V1 reads $6^{d}$–$9^{e}$ on marg — $^{d}$) B1 युज्यस्व (for बुध्यस्व)

7 T2 G. om 7 (cf v l. 6) V1 reads 7 on marg The sequence in B2 Da is $8^{ab}$, $7^{cd}$, $8^{cd}$, $7^{ab}$ — $^{a}$) B1 साम, B3 Dn D2 3 5 Cv साम, D7 T1 G3 4 शर्म, M1 3 सम (for शम) — $^{b}$) B1 सन्यासम् (for व्यायामम्) K3 5 V1 Bo 1 3-5 Dn D2-8 S (T2 G1 om) जना (for तथा) B2 Da केचिच्चैव प्रतिग्रह (cf $8^{d}$) — B2 Da D4 transp $7^{cd}$ and $8^{ab}$ D4 also repeats $7^{cd}$ after $8^{e}$ D6 om. $7^{c}$–$8^{b}$ T1 G2-4 M repeat $7^{cd}$ after $8^{ab}$ — $^{c}$) K3 D4 नेतं (D4 second time नैत), D8 नैके, T1 G2-4 M2 (all first time) नैतन् (for नैकं) K3 5 D4 (both times) तथापरे, Dn D5 8 न चापरे, G2 (second time) M (M2 first time as in text) Cv न च परं K5 Da किंचिद्, D8 कचिद् (for केचिद्) — $^{d}$) K4 उभये Dn2 न (for च)

8 T2 G1 om $8^{abc}$ (cf v 1 6) K3 D6 om. $8^{ab}$ (for D6, cf v 1. 7) B2 Da D4 transp $7^{cd}$ and $8^{ab}$ V1 reads 8 on marg — $^{a}$) K5 यज्ञमेव, Da जप(Da2 °य)मेके, D1 यज्ञमेकं — K4 om (hapl) $8^{b}$–$9^{a}$, D7 om (hapl.) $8^{bc}$ In T1 G2-4 M, $7^{cd}$ is repeated after $8^{ab}$, in D4, after $8^{e}$ — $^{d}$) K5 V1 Bo 1 3-5 Dn D2 3 5-8 S केचिच्चैव; D4 केचिदिव K5 D8 परिग्रह (for प्रतिग्रहं) B2 Da सत्य चापि तथापरे — $^{f}$) D6 ध्यायंतम्

9 K4 om $9^{a}$ (cf v 1 8) V1 reads $9^{abc}$ on marg — $^{a}$) D2 3. 5 एके चैव (for राज्यमेके) — $^{b}$) K2-5 V1 B D (except D1) S प्रजाना (for सर्वेषा) S (except T2 G1) परिपालनात् — $^{c}$) Dn1 D6 G2 हित्वा, T2 G1 तथा (for हत्वा) K3. 5 V1 B D (except D1) transp भित्त्वा and छित्त्वा T G1 3 4 हित्वा (for भित्त्वा) D7 S जित्वा (M4 हित्वा) (for छित्त्वा) — $^{d}$) Da G1 °शालिन , M2 °जीविन (for °शीलिन)

एतत्सर्वं समालोक्य बुधानामेष निश्चयः ।
अद्रोहेणैव भूतानां यो धर्मः स सतां मतः ॥ १०
अद्रोहः सत्यवचनं संविभागो धृतिः क्षमा ।
प्रजनः स्वेषु दारेषु मार्दवं ह्रीरचापलम् ॥ ११
धनं धर्मप्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत् ।
तस्मादेवं प्रयत्नेन कौन्तेय परिपालय ॥ १२
यो हि राज्ये स्थितः शश्वद्वशी तुल्यप्रियाप्रियः ।
क्षत्रियो यज्ञशिष्टाशी राजशास्त्रार्थतत्त्ववित् ॥ १३
असाधुनिग्रहरतः साधूना प्रग्रहे रतः ।
धर्मे वर्त्मनि संस्थाप्य प्रजा वर्तेत धर्मवित् ॥ १४
पुत्रसंक्रामितश्रीस्तु वने वन्येन वर्तयन् ।
विधिना श्रामणेनैव कुर्यात्कालमतन्द्रितः ॥ १५
य एवं वर्तते राजा राजधर्मविनिश्चितः ।
तस्यायं च परश्चैव लोकः स्यात्सफलो नृप ।
निर्वाणं तु सुदुष्पार बहुविघ्नं च मे मतम् ॥ १६
एवं धर्ममनुक्रान्ताः सत्यदानतपःपराः ।
आनृशंस्यगुणैर्युक्ताः कामक्रोधविवर्जिताः ॥ १७
प्रजाना पालने युक्ता दममुत्तममाश्रिताः ।

C. 12. 633
B. 12. 21 19
K. 12. 21 20

---

10 $^{b}$) K3 D4 इति (for एष) D7 निर्णय D5 8 ब्रवीम्येष विनिश्चय —$^{c}$) = Manu 4 2$^{a}$, cf Manu. 4 148$^{c}$ Dn2 अद्रोहेण च, D1 अद्रोहेनैव —$^{d}$) D7 योग्य धर्म सनातन

11 Cf. 12 60 7 G3 om 11$^{a}$ —$^{b}$) Dn2 D1 स (for स-) K2 धृतिक्षमा, K3 B2 Da D4 S दम (T2 °म) क्षमा (B2 M1 3 °मा, G1 °म), K5 V1 Bo 1 3-5 Dn D2 3 . 6 8 दया दम, D7 दमक्षम (for धृति क्षमा) —$^{c}$) K2 4 5 B2 4 5 Da Dn D2 2. 5 6 8 T2 M प्रजन, D7 T1 G प्रजाना (for प्रजन) Da1 स्वे स्व (for स्वेषु) —$^{d}$) = 6 38 2$^{d}$ G1 श्रीर् (for ह्रीर्)

12 $^{a}$) K3 धर्म धर्म, K4 धन धर्म, K5 V1 B1 5 Da Dn D1 6 M2 एवं धर्म, Bo एव धर्म्य, B1 D8 एव धर्म, B2 एवविध, B3 D3 5 एव धर्म्य, D7 T2 G एवद्धर्म, T1 M4 एत धर्म, M1 3 एन धर्म (for धन धर्म) D1 प्रधानेषु, D8 -प्रदानेषु, G1 प्रजानेष्ट —$^{c}$) K2-4 D4 एन, K5 B Da Dn D2 3 5-8 S एतत् (for एव) —$^{d}$) K Da2 D4 8 प्रति (for परि)

13 $^{a}$) D8 यो राज्येपि K1 राज्येंमित (sic) —$^{b}$) K4 तुल्ये —$^{c}$) Dn2 °शिष्टमि, D6 8 °शिष्टासी D4 क्षत्रियाया यज्ञमिष्टाशी (sic) —$^{d}$) K2 3 5 Dn2 D1 G1 राजा, D2 राज्य (for राज) K1 शास्त्रास्त्र (for °र्थ-)

14 B1 om (hapl) 14 —$^{b}$) K3 साधुना, D4 साधुना K3 5 D4 पालने (for प्रग्रहे) —V1 reads 14$^{cd}$ on marg —$^{c}$) K2 5 V1 Bo 2-5 Da2 Dn D1 2 4 6. 8 धर्म, Da1 धर्म्य, D7 वर्म्ये, S (except T1 M2) धर्म्ये (for धर्मे) —$^{d}$) G1 प्राज्ञो (for प्रजा) K3 5 धर्मत (for °वित्) D7 प्राज्ञो धर्मानुवर्तते

15 V1 reads 15$^{ab}$ on marg —$^{a}$) D1 -सक्रमित K2-5 V1 B Da Dn D2-8 S च (for तु) —$^{b}$) D4 वन (for वने) B4 भारत, D7 S वर्तयेत् (for वर्तयन्) —$^{c}$) Ś1 ग्रामनेनैव, K1 श्रामण्ये°, K2 D1 श्रामणे°, K3 श्रामणा, K5 V1 Bo 2-5 Dn1 D2 3 5 6 M4 श्रावणे°, B1 श्रायणे°, Dn2 साधने°, D7 श्रमणे°, D8 Cv श्रवणे°, T2 श्रमगे° (for श्रामणे°) T1 G2-4 विधानमाश्रमाणा वै —$^{d}$) D7 S (except T2 M2) कुर्वन् (for कुर्यात्) K5 B1 3-5 Dn D2 3 5 8 कर्माणि, V1 Bo 2 Da कामम् (for कालम्) D6 कुर्यात्कामसत द्विज

16 $^{a}$) B2 (marg, also as in text) G1 एव यो (for य एवं) K1 B2 (before corr) राजन् D4 om राजा —$^{b}$) K1 D8 स राजा धर्मनिश्चित, K4 D4 रानधर्मेपि (D4 °र्मे वि) निश्चित, T2 G1 राजधर्म विनिश्चय —$^{c}$) Ś1 K1 4 चापरश्, D1 वापरश् —$^{d}$) D7 कौसल्या (for लोक स्यात्) K5 V1 B Da Dn D2 4 5 6 8 सफलोदय —$^{e}$) Ś1 K1 T2 G1 Cv च, K3 5 B Da Dn D2-6 हि (for तु) K3 V1 B D2-5 Cv सुदुष्प्राप, K6 Dn2 °ष्प्राप्यं, Dn1 सुदुष्प्राप्य —$^{f}$) Da बहुवित्त K1 ते (for मे)

17 $^{a}$) D7 T G एतद्, M4 एत (for एव) D2-5 अनुप्राप्ता —$^{b}$) Ś1 K4 B2 D1 4 G1 धर्म (for दान) —$^{c}$) D4 अनृशमगुणे

18 $^{b}$) K3 धनम्, K4 5 Bo 1 3 5 Dn D2 3 5 6 धर्मम् (for दमम्) T2 आश्रिता B4 damaged —$^{c}$) K2-5 V1 B Dn Da D2 3 5-8 S णार्थे (for णार्थं) K1 युध्येन, K5 V1 B Dn D2 3 5-8 S युध्यत (G1 °ति) —$^{d}$) G2-4 संप्राप्य (for °प्ता) K5 V1 B D2 3 5-7 प्राप्ता गतिमनुत्तमा, D1 प्राप्ता गतिमुत्तम (sic)

गोब्राह्मणार्थं युद्धेन संप्राप्ता गतिमुत्तमाम् ॥ १८
एवं रुद्राः सवसवस्तथादित्याः परंतप ।
साध्या राजर्षिसंघाश्च धर्ममेतं समाश्रिताः ।
अप्रमत्तास्ततः स्वर्गं प्राप्ताः पुण्यैः स्वकर्मभिः ॥ १९

इति श्रीमहाभारते शान्तिपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

# २२

वैशंपायन उवाच ।
तस्मिन्वाक्यान्तरे वाक्यं पुनरेवार्जुनोऽब्रवीत् ।
विषण्णमनसं ज्येष्ठमिदं भ्रातरमीश्वरम् ॥ १
क्षत्रधर्मेण धर्मज्ञ प्राप्य राज्यमनुत्तमम् ।
जित्वा चारीन्नरश्रेष्ठ तप्यते किं भवान्भृशम् ॥ २
क्षत्रियाणां महाराज संग्रामे निधनं स्मृतम् ।
विशिष्टं बहुभिर्यज्ञैः क्षत्रधर्ममनुस्मर ॥ ३
ब्राह्मणानां तपस्त्यागः प्रेत्यधर्मविधिः स्मृतः ।
क्षत्रियाणां च विहितं संग्रामे निधनं विभो ॥ ४
क्षत्रधर्मो महारौद्रः शस्त्रनित्य इति स्मृतः ।
वधश्च भरतश्रेष्ठ काले शस्त्रेण संयुगे ॥ ५
ब्राह्मणस्यापि चेद्राजन्क्षत्रधर्मेण तिष्ठतः ।

---

19 [a]) Ś1 सवसवास्, K1 तु यमवम्; Da मवर णास्; G1 तथादित्या —[b]) G1 वसवश्च (for तथा दित्या) —[c]) K8 D4 साक्षाद् (for साध्या) —[d]) K2 4 धर्ममेते, G1 °मेन, G2 शममेतन् —[e]) G1 प्रमत्तास्तु Ś1 B1 तथा (for तत) K4 सर्गं —[f]) G1 प्राप्तं K1 सुकर्मभि

Colophon. — *Sub-parvan* Ś1 K V1 B Dn D1–7 T G1 8 M राजधर्म — *Adhy name* Dn T1 G4 देवस्थानवाक्य, M1 8 बृहस्पतिवचननिर्देशन, M2 बृह स्पतिवचन — *Adhy no* (figures, words or both) K6 B2–4 Dn1 Dn D2 7 (marg) S 21 (as in text), D8 20 — *Śloka no* Dn1 21

## 22

1 D8 om the ref —[a]) K5 B Dn D2 3 6 7 8 T G अस्मिन्, Ca तस्मिन् (as in text) K8 om वाक्यान्तरे K6 Dn D8 एवान्तरे Da एतस्मिन्नन्तरे वाक्य —[c]) K6 V1 B Da Dn D2 3 6–8 S निर्विण्ण (for विषण्ण-) K8 D4 वदनं —[d]) D8 इति (for इद) K6 V1 B Da Dn D2 3 5–8 S अच्युत (B1 अच्चुत), D1 अब्रवीत् (for ईश्वरम्)

2 Before 2, B3 Da D7 ins अर्जुन उवाच —[a]) B1 क्षेत्र (for क्षत्र-) K6 D8 सर्वज्ञ (for धर्म°) —[b]) B1 प्राप्य; D2 8 प्राप्त K5 V1 B Dn D2 3 6–8 S सुदुर्लभ (for अनुत्तमम्) —[c]) M2 भित्त्वा (for जित्वा) K2 4 D1 [अ]प्यरीन् —[d]) G1 तप्यसे K6 Dn भृश भवान् (by transp) D3 तप्यते कीदृश भवान्

3 [a]) K1 om (hapl) from महाराज up to क्षत्रियाणा (in 4[c]) —[b]) K5 V1 Bo 1 3–5 D (except D1 7) G2 मत (for स्मृतम्) —[c]) Dn1 विशिष्टैर् —[d]) K4 D5 °धर्ममनुस्मरन्, B Dn D2 3 4 6 °धर्म विधि स्मृत

4 K1 om up to क्षत्रियाणा (cf v 1 3) Bo 1 om (hapl) 4[ab] —[a]) B2 Da ब्राह्मणस्य Ś1 K2 4 D1 दमस्, T1 G3 4 जपस् (for तपस्) —[b]) K4 5 B3–6 Da D2 3 6 एष, D5 प्रेत (for प्रेत्य-) Dn1 धर्मविध — D7 om (hapl) 4[c]–5[b] —[c]) K3 D4 T2 G1 तु, V1 B D2 3 6 6 T1 G2–4 M हि (for च) K5 V1 B Da Dn D2 3 5 6 S निधन (for विहित) D3 क्षत्रियाणां महाराज —[d]) K5 V1 Bo 2 3 (marg) 6 Da Dn1 D6 8 S विहित (G1 °त), B1 3 4 Dn2 D2 3 5 नियत (for निधनं) K4 6 V1 B D (D7 om) S प्रभो (Dn2 मत) (for विभो)

5 D7 om 5[ab] (cf v 1 4) —[a]) Dn2 D3 5 6 क्षात्रधर्मो, G2 क्षत्रधर्मे Dn1 महाराज —[b]) Dn2 शास्त्रनित्य, G1 शस्त्रच्छस्त्र (sic) —[c]) Dn1 वध्यश्च, M4 वध च

6 D6 om 6 —[a]) K6 तद्, B3 D8 ते, D4 वै (for चेद्) —[b]) K1 °धर्मे तु K5 V1 B Da Dn D2 3 5 8 S वर्तत (for तिष्ठत) —[d]) K1 क्षात्रे K6 B Da Dn D2 3 6 8 ब्रह्मसभव, V1 D7 S °संहि(V1

प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंस्थितम् ॥ ६
न त्यागो न पुनर्याच्ञा न तपो मनुजेश्वर ।
क्षत्रियस्य विधीयन्ते न परस्वोपजीवनम् ॥ ७
स भवान्सर्वधर्मज्ञः सर्वात्मा भरतर्षभ ।
राजा मनीषी निपुणो लोके दृष्टपरावरः ॥ ८
त्यक्त्वा संतापजं शोकं दंशितो भव कर्मणि ।
क्षत्रियस्य विशेषेण हृदयं वज्रसंहतम् ॥ ९
जित्वारीन्क्षत्रधर्मेण प्राप्य राज्यमकण्टकम् ।
विजितात्मा मनुष्येन्द्र यज्ञदानपरो भव ॥ १०
इन्द्रो वै ब्रह्मणः पुत्रः कर्मणा क्षत्रियोऽभवत् ।
ज्ञातीनां पापवृत्तीनां जघान नवतीर्नव ॥ ११
तच्चास्य कर्म पूज्यं हि प्रशस्यं च विशां पते ।
तेन चेन्द्रत्वमापेदे देवानामिति नः श्रुतम् ॥ १२
स त्वं यज्ञैर्महाराज यजस्व बहुदक्षिणैः ।
यथैवेन्द्रो मनुष्येन्द्र चिराय विगतज्वरः ॥ १३
मा त्वमेवंगते किंचित्क्षत्रियर्षभ शोचिथाः ।
गतास्ते क्षत्रधर्मेण शस्त्रपूताः परां गतिम् ॥ १४
भवितव्यं तथा तच्च यद्वृत्तं भरतर्षभ ।
दिष्टं हि राजशार्दूल न शक्यमतिवर्तितुम् ॥ १५

C. 12. 650
B. 12. 22. 15
K. 12. 22. 15

इति श्रीमहाभारते शान्तिपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

---

°जि, T2 G1 2 °मि)त

7 $^{a}$) K2 न त्यागेन, D1 नित्यागेन K1 3. 5 V1 B Da Dn D2–8 S यज्ञो, K4 योगो, D1 यागा (for याच्ञा with Ś1 K2). —$^{b}$) Ś1 तापसा, K1 तपो वा, K3 4 D1 तथैव (for न तपो) K2 4 B1 D1 मनुजाधिप, K8 मनुजेश्वर —$^{d}$) K4 B5 D1–3 5 7 8 T G M3 परस्योप, B2 परार्थोप; D4 परश्रोप°. V1 -जीवितम्; M1 2 -जीवित

8 $^{a}$) Ś1 M4 समावान्, M3 स्वभावात् (for स भवान्). —$^{b}$) K3. 5 V1 B Dn D2–8 S धर्मात्मा (for सर्वा°) —$^{d}$) D2 लोकेदृष्ट°, D7 T G दृष्टलोक°. Bo 1 4 (m as in text) D3 (inf lin) 5 -परापर°, D2 5 (marg) 7 -पराक्रम°, D8 -परायण°

9 $^{a}$) K1 त्यक्ते K4 संतापजे शोके (sic) B2 लोकं (for शोकं). —$^{b}$) = (var) 33 8$^{b}$ Ś1 K2 4 D1 T1 G M वसितो; Bo दसतो B1 Da कर्मणा, D8 कर्मसु, M कर्मणे (for कर्मणि) —$^{c}$) D8 विशेषज्ञ (for °षेण) —$^{d}$) G1 यज्ञ (for वज्र-) Ś1 K1 3 V1 Bo 2–5 Da D2–5 7 8 G2–4 M3 -सहित, K3 5 Dn -सन्निभं, B1 -सम्भृतं, T2 G1 -समित (for -संहतम्) Cnp विजय धर्मसहितं

10 $^{a}$) B2 Da हत्वा (for जित्वा) Ś1 K1 [अ]रिं —$^{c}$) K1 विजितारिर्, Da विजित्यात्मा, D2 3 5 6 (marg.) विदितार्थो; D6 विजितास्ति, D8 विदितात्मा D1 जितात्मा मनुजश्रेष्ठ —$^{d}$) D1 6 यज्ञदान (for °दान) Bo [ऽ]भवत् (for भव)

11 $^{a}$) D1 वै ब्राह्मण°, G1 वैश्रवण°, Ca as in text B2 इंद्रश्रेष्ठत्वमाकाङ्क्षन् —$^{b}$) K2 3 5 V1 B Dn D2–5 7 8 S क्षत्रिय° कर्मणा (by transp) K5 G2 M4 भवेत्, D1 [ऽ]भवात् D6 क्षत्रिय° समपद्यत —$^{c}$) Dn S पापवृत्ता(Dn2 °त्रा)नां, D4 °वर्तानां, D6 °बुद्धीनां (for °वृत्तीनां) —$^{d}$) = 2 22. 18$^{b}$ B 9 51 36$^{b}$, RV 1 84 13, Tait Br 1 5 8 D7 नवतिर्. Ca cites नवतीर्नव and glosses दशाधिकाष्टशतानि

12 $^{a}$) D2 3 5 8 तथास्य, M2 तच्चान्यत्. K2 3 4 V1 B Da Dn D2 3 5–8 S (except M3) च; D4 वै (for हि) —$^{b}$) D7 S (except G3) प्रशस्तं, D3 प्रशास्य D4 ते (for च) —$^{c}$) K3 D4 चेंद्रत्वम्. K5 Dn तेनेंद्रत्वं समापेदे, D8 तेनेवेंद्रत्वमा° Ca cites इन्द्रत्व —$^{d}$) M3 न (for नः). T1 G2 3 श्रुति°.

13 $^{a}$) K1 D1 यज्ञ Da D7 S बहुविधैर् (for महाराज) —$^{b}$) V1 भूरिदक्षिणै°, Da वर° —$^{c}$) K1 2 D1 मनुष्येषु

14 $^{a}$) D7 एवंविधे —$^{b}$) T G1 3 4 M1 2 शोचथा K5 Dn1 शोचेथा° क्षत्रियर्षभ; Dn2 शोचेथा भरतर्षभ, G3 क्षत्रियस्य विशोचया°. — V1 reads 14$^{cd}$ on marg —$^{c}$) D6 क्षात्र, T2 M2 शस्त्र (for क्षत्र) —$^{d}$) Da1 शस्त्रभूतां, Da2 °भूता D1 पर (for परां)

15 V1 reads 15$^{ab}$ on marg —$^{b}$) Bo 1 4. 5 प्रवृत्त

# २३

वैशंपायन उवाच ।
एवमुक्तस्तु कौन्तेयो गुडाकेशेन भारत ।
नोवाच किंचित्कौरव्यस्ततो द्वैपायनोऽब्रवीत् ॥ १
बीभत्सोर्वचनं सम्यक्सत्यमेतद्युधिष्ठिर ।
शास्त्रदृष्टः परो धर्मः स्मृतो गार्हस्थ्य आश्रमः ॥ २
स्वधर्मं चर धर्मज्ञ यथाशास्त्रं यथाविधि ।
न हि गार्हस्थ्यमुत्सृज्य तवारण्यं विधीयते ॥ ३
गृहस्थं हि सदा देवाः पितर ऋषयस्तथा ।
भृत्याश्चैवोपजीवन्ति तान्भजस्व महीपते ॥ ४
वयांसि पशवश्चैव भूतानि च महीपते ।
गृहस्थैरेव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥ ५
सोऽयं चतुर्णामेतेषामाश्रमाणां दुराचरः ।
तं चराविमनाः पार्थ दुश्चरं दुर्बलेन्द्रियैः ॥ ६
वेदज्ञानं च ते कृत्स्नं तपश्च चरितं महत् ।
पितृपैतामहे राज्ये धुरमुद्वोढुमर्हसि ॥ ७
तपो यज्ञस्तथा विद्या भैक्षमिन्द्रियनिग्रहः ।

---

B2 Da नृपसत्तम (for भरतर्षभ) — c) D7 G3 इष्टं (for दिष्ट) V1 राजशार्दूल, Da नृपशार्दूल; M1 नर° — d) Da1 D6 इति वर्तितु, D1 अतिवर्तित

Colophon. — *Sub-parvan* Ś1 K V1 (on marg) B Da Dn D1-7 T G1 2 M राजधर्म — *Adhy name* K5 Dn T G2 4 अर्जुनवाक्य; M1-3 इंद्रनिदर्शन — *Adhy no* (figures, words or both) K5 B3 4 Da1 Dn D2 7 (marg) S 22 (as in text), D3 21 — *Śloka no* Dn1 D1 3 15.

## 23

1 D6 3 om the ref — a) D1 उक्त; D3 उक्त्वा (for उक्तस्) — b) K3 5 V1 B Dn D2-6 8 पाडव (D3 °व), Da3 भारत°, T2 G1 धीमता (for भारत) — c) K1 3 B Da1 Dn1 D1 2 4 6 8 M4 कौरव्य, M3 कौरव्यं, M1 (*inf lin sec m.*) वचन (for कौरव्यस्) — d) G1 तदा (for ततो)

2 Before 2, K4 5 V1 B Dn D2 3 5-7 T2 G M ins व्यास उवाच — a) K5 Dn सौम्य; Da श्रुत्वा (for सम्यक्) — b) K3 मतम्; D4 ऋतम् (for सत्यम्) — c) K5 D3 शास्त्रे; Ca शास्त्र (as in text) D4 [अ]परो (for परो) — d) K2 4 B3 D1 श्रुतो; K5 Dn G2 स्थितो (for स्मृतो) K4 5 B1 4 Da D1-3 8 गार्हस्थ; Dn G2 गार्हस्थ्यम् (for °स्थ्य) K5 B1 Da आश्रमे, Dn G2 आश्रित

3 a) G1 स (for स्व) Ś1 K1 च हि (for चर) D4 धर्मज्ञे — K3 reads 3b-4b on marg — b) B1 यथाकाम; Da D2 3 8 यथाशक्ति, D7 S शास्त्रदृष्ट (for यथाशास्त्र). K1 यथा विधि — d) D4 महीपते (for विधीयते).

4 G2 om 4 K3 reads 4ab on marg — a) Da गृहस्थस्य (Da2 °श्च), D3 गृहस्था हि; T1 G3 4 गृहिण हि — b) K1 पितरो (for पितर). K2 3 5 V1 B Da Dn D2-8 S (G2 om) पितरोतिथयस्तथा, K4 D1 ऋषय° पितरस्तथा; text as in Ś1 only — c) D7 लिप्यंते; S (G2 om) लि(M1 ल)प्संते (for °जीवन्ति) — d) K3 5 V1 B Da Dn D2-3 T1 G3 4 M भरस्व, G1 हरस्व (for भजस्व)

5 b) K3, 5 V1 B Dn D2-8 S जनाधिप, Da जनानि च (for महीपते) — 5cd = (var) Manu 3 78 — c) D6 अवधार्य च (for एव धार्यन्ते) — d) K3 5 V1 B Dn D2-8 T G तस्माच्छ्रेष्ठो गृहाश्रमी (D7 T G °म°; D3 °मा), M तस्माज्ज्येष्ठो गृहाश्रम

6 a) G1 योय K3 एषा तु (for एतेषाम्) Da1 सोय चतुर्वर्णा तेषाम् (sic) — b) Ś1 K3 G3 दुरावर°, K1 (before corr) M2 3 दुराचरा, K1 (by corr) च दुश्चर°; D1 दुरावस — c) K5 Dn [अ]च विधिं, V1 B Da D2 3 5 6 8 [आ]शु विधिं (for [अ]विमना) — d) V1 योधार्यो (for दुश्चर)

7 With 7ab, cf. 11ab — a) Da D7 S हि (for च) — b) B2 सु (for च) K5 Da1 Dn [आ]चरित G3 तपश्चरति तं महत् — c) K3 5 V1 B Da Dn D2-8 S °मह राज्य — d) K3 5 V1 B Dn D2-6 8 S धुर्यवद्; Da धूर्यवद्; D7 धार्यवद् (for

ध्यानमेकान्तशीलत्वं तुष्टिर्दानं च शक्तितः ॥ ८
ब्राह्मणानां महाराज चेष्टाः संसिद्धिकारिकाः ।
क्षत्रियाणां च वक्ष्यामि तवापि विदितं पुनः ॥ ९
यज्ञो विद्या समुत्थानमसंतोषः श्रियं प्रति ।
दण्डधारणमत्युग्रं प्रजानां परिपालनम् ॥ १०
वेदज्ञानं तथा कृत्स्नं तपः सुचरितं तथा ।
द्रविणोपार्जनं भूरि पात्रेषु प्रतिपादनम् ॥ ११
एतानि राज्ञां कर्माणि सुकृतानि विशां पते ।
इमं लोकममुं लोकं साधयन्तीति नः श्रुतम् ॥ १२
तेषां ज्यायस्तु कौन्तेय दण्डधारणमुच्यते ।
बलं हि क्षत्रिये नित्यं बले दण्डः समाहितः ॥ १३
एताश्चेष्टाः क्षत्रियाणां राजन्संसिद्धिकारिकाः ।
अपि गाथामिमां चापि बृहस्पतिरभाषत ॥ १४
भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ १५
सुद्युम्नश्चापि राजर्षिः श्रूयते दण्डधारणात् ।
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ १६

C 12 668
B. 12. 23. 16
K 12. 23. 16

इति श्रीमहाभारते शान्तिपर्वणि त्रयोविंशोऽध्याय. ॥ २३ ॥

---

धुरमुद् ) B3 ( marg ) शौचमर्हसि ( also वोढुमर्हसि )

8 $^{a}$) T2 G1 दमो ( for तपो ) D1 यज्ञास् B Da Dn D2 3.5 6 8 क्षमा, T2 G1 तपो ( for तथा ) K1 विज्ञा — $^{b}$) K2 3 5 V1 B ( except Bo ) Da1 Dn D1 2 5-8 G1 भैक्ष्यम्, D4 भिक्ष्यम् K5 5 V1 B Da Dn D2-3 S संयम ( for -निग्रह ) — After $8^{ab}$, T1 G2 4 read $10^{c}$–$11^{b}$ and G3, $10^{ab}$ and $11^{ab}$ (for the first time), repeating them in their proper places — $^{c}$) T1 G2-4 तथा हि ( for ध्यानम् ) K2 V1 B D2 3.5 G2 M2 4 -शीलित्व D7 ध्यानमेकातत शीलस् — $^{d}$) K1 तुष्टिं Bo. 2-5 Dn D2 3 5 6 8 G2 ज्ञान ( for दान )

9 $^{a}$) D7 ब्राह्मणानामियं चेष्टा — $^{b}$) K1 5 V1 B Dn D2 3 5 6 8 T G2-4 चेष्टा, Da चेष्टां, D7 ज्ञान K1 T2 G1 M1 3 -कारका, K5 V1 B Dn D2 5-8 T1 G2-4 कारिका, D3 -कारिणी ( for कारिका ) — $^{c}$) K4 5 V1 B Da Dn D2 3 5-8 S ( except M2 ) तु, D4 नु ( for च ) — $^{d}$) Ś1 K1 तथापि, T G1 2 4 त्वयापि, M2 तवाभि- K3 D4 विदिवा Da प्रभो ( for पुन ) D7 तच्चापि चिहित मम॰

10 T1 G2 4 read $10^{c}$–$11^{b}$ and G3, $10^{ab}$ and $11^{ab}$ ( for the first time ) after $8^{ab}$ ( cf v 1 8 ) — $^{a}$) T1 G2-4 ( all first time ) ध्यानं, M1 यज्ञ- ( for यज्ञो ) Dn2 यज्ञो विज्ञानमुत्थानम् Ca cites समुत्थान ( as in text ) — $^{b}$) T1 G2-4 ( all first time ) सतोषश्च — $^{c}$) K2 5 V1 B Dn D2-8 S ( T1 G2 4 both times ) उग्रत्व ( for अत्युग्र ) — $^{d}$) B1 पालनं पर ( for परिपालनम् )॰

11 For the first occurrence of $11^{ab}$ in T1 G2-4, cf v 1 8 V1 reads 11 on marg T2 G1 om $11^{ab}$ With $11^{ab}$, cf $7^{ab}$ — $^{b}$) K1 यथा, D7 T1 ( first time as in text ) G2 ( both times ) 3 4 ( both first time as in text ) महत् ( for तथा ) — $^{c}$) Dn2 द्रविणोपार्जव, D7 S द्रविण चार्जित ( T2 °णस्यार्जनं, G2-4 °ण स्वार्जित, M4 °ण स्वार्जित ) — $^{d}$) K2 5 V1 B Dn D2-6 8 पात्रे च B1 ( m as in text ) प्रतिपालनं D7 S सम्यग्वै दण्डधारण ( G1 °रिण )

12 $^{a}$) D7 S लोके चत्वारि ( for राज्ञां कर्माणि ) — $^{c}$) D6 इद ( for इम ) K2 5 V1 B Dn D2-8 चैव ( for लोकं ) S साधयंति ( G2 °ते ) परे ( G1 °र; M1 °रो ) लोके — $^{d}$) D1 S मानवानिति Bo 4 ( m as in text ) [इ]ह ( for [इ]ति ) G1 विश्रुतं

13 $^{a}$) K5 V1 Bo 2-5 Da Dn D2 2 5 6 8 T1 G2-4 M एषा, D7 एषो, T2 G1 एतज् Dn2 राज्याय, Da S ज्यायश्च, D7 [ऽ]ध्यायश्च — $^{c}$) D1 7 क्षत्रियो — $^{d}$) K1 बल ( for बले )

14 D4 om 14 — $^{a}$) K6 Dn विद्या, V1 B1 3 D2 6 8 श्रेष्ठा ( for चेष्टा ) — $^{b}$) Ś1 K1. 4 G1 2 कारका — $^{c}$) K2 4 D1 अत्र; K8 अथ ( for अपि ), D7 T1 G3 4 गाथाम् K8 D2 3 7 S ( except M2 ) चात्र, B2 राजन्, Dn D6 चैव, D8 चाह ( for चापि ) — $^{d}$) K8 5 B Dn D2-8 S ( except G4 ) अगायत ( for अभाषत )॰

15 = ( var ) 2 60 21 5 33 49 12 57 3, B 13 36 16, Śukranīti IV 7 303. — $^{a}$) B5 ( marg ,

# २४

युधिष्ठिर उवाच ।

भगवन्कर्मणा केन सुद्युम्नो वसुधाधिपः ।
संसिद्धिं परमां प्राप्तः श्रोतुमिच्छामि तं नृपम् ॥ १

व्यास उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शङ्खश्च लिखितश्चास्तां भ्रातरौ संयतव्रतौ ॥ २
तयोरावसथावास्तां रमणीयौ पृथक्पृथक् ।
नित्यपुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु ॥ ३
ततः कदाचिल्लिखितः शङ्खस्याश्रममागमत् ।
यदृच्छयापि शङ्खोऽथ निष्क्रान्तोऽभवदाश्रमात् ॥ ४
सोऽभिगम्याश्रमं भ्रातुः शङ्खस्य लिखितस्तदा ।
फलानि शातयामास सम्यक्परिणतान्युत ॥ ५
तान्युपादाय विस्रब्धो भक्षयामास स द्विजः ।
तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागमत् ॥ ६
भक्षयन्तं तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत् ।
कुतः फलान्यवाप्तानि हेतुना केन खादसि ॥ ७
सोऽब्रवीद्भ्रातरं ज्येष्ठमुपस्पृश्याभिवाद्य च ।
इत एव गृहीतानि मयेति प्रहसन्निव ॥ ८

---

also as in text) नाथयति, Dn2 निगिलति —[b]) Ś1 M2 सर्पा, K2.4 D1 सर्पान्, D7 T G M1.3.4 सर्पो (for सर्पो) Da1 बलि- (for बिल-) S -शयाविव —[c]) T1 क्षत्रिय (for राजान) D7 S चाप्ययोन्द्वारं —[d]) D4 चाप्रवासनं, G1 °सिन

16 [a]) Bo 1.3 (m. as in text) प्रद्युम्नश्; Da1 श्रूसुम्नश्; D8 सुद्युम्न —[c]) Da लब्धवान्

Colophon om in K3.6 V1 B Da Dn D2–6.8 — *Sub parvan* K1.2.4 D1.7 T G1.2 M राजधर्म — *Adhy name* T1 G2–4 व्यासवाक्यं, M1–3 गृहस्थाश्रमस्तुति° — *Adhy no* (figures, words or both) D7 S 23 (as in text, but G2 [erroneously] 13)

## 24

1 D8 om the ref —[a]) Da2 D4 M2 भगवान् —[b]) Da1 सद्युम्नो, Da2 सुद्युस्नो —[c]) B2 Da D7 T1 G1.3.4 सिद्धिं परमिका प्राप्तः —[d]) K1 D7 M4 नृप, D1 G4 नृप°, D4 नय (for नृपम्)

2 D3 om the ref Ś1 K1 व्यासदेव, G1 भगवान् T2 G1 om 2[ab] —[c]) B1 चैव (for चास्ता) —[d]) K3.5 B2 Dn D8 शसितव्रतौ, V1 Bo 1.3–5 Da D2–7 S संशित°

3 [a]) Ś1 अवसथाव् —[c]) Ś1 K Dn D1 G3 नित्य (for नित्य) Da2 दक्षैर् (for वृक्षैर्) —[d]) Bo 5 उपेतैर्; G3.4 उपेतो Ś1 (*sup lin* as in text) बाहुदा नृप; K2.4 D1 भरतर्षभ Ca v cite बाहुदामनु (as in text) D7 उपेता बहुधामन (sic)

4 [b]) K5 Dn आगत°, D1 आगत, D2 आगत् (submetric) —[c]) K5 V1 B Da Dn D2.3.5–8 T G2–4 M transp अपि and अथ K3 D4 T2 च (for [ऽ]पि) K3 D4 [ऽ]पि, T3 G1 च (for [अ]थ)

5 [a]) Bo सोपि (for सोऽभि-) —[b]) K3 चक्रस्य, Da चक्रस्य, D4 चक्रास्य; D7 शखमल्; T G1.2.4 चक्रमन्; G3 M1.3.4 चक्रमल्, M2 चक्रमल् (for शङ्खस्य) K5 B1 Da D7 T G1.3.4 तथा (for तदा) —[c]) K5 B3 Dn पात° (for शात°) —[d]) Da परिणतान्पुन° D4 द्विजमादायसस्तथा (sic)

6 D4 om. $6^{ab}$ —[a]) Dn अभ्युपा° (for तान्युपा°) K4 Dn1 विस्रब्धौ, Bo 2 D8 विश्रब्धो —[b]) G1 वै; M2 तद् (for स) —[c]) Dn1 आस्मिंश्च K3 D2.7.8 [ए]वं (for [ए]व) —[d]) D1 शांखोपि; D6 शखस्य K1 आगत् (submetric), K5 Dn D4 आगत° (for °मत्)

7 [a]) D2.3.5.8 च तं, D4 नु तं, T1 ततो; G2–4 तदा (for तु त) Ś1 K1.2 दृष्ट्वा तं (by transp). —[d]) K3.5 D4.7 S खादसे केन हेतुना

8 [a]) V1 Da1 G2 श्रेष्ठम् (for ज्ये°) —[b]) V1 B D (except D4.7) उपसृत्य, G1 °गम्य —[c]) V1 इव° प्रती-; Da इतो गृहाद्; D1 एत एव (for इत एव) —[d]) Da2 नयेति

9 [a]) B5 Dn D2 तथा, D7 S तत (for तदा)

तमब्रवीत्तदा शङ्खस्तीव्रकोपसमन्वितः ।
स्तेयं त्वया कृतमिदं फलान्याददता स्वयम् ।
गच्छ राजानमासाद्य स्वकर्म प्रथयस्व वै ॥ ९
अदत्तादानमेवेदं कृतं पार्थिवसत्तम ।
स्तेनं मां त्वं विदित्वा च स्वधर्ममनुपालय ।
शीघ्रं धारय चौरस्य मम दण्डं नराधिप ॥ १०
इत्युक्तस्तस्य वचनात्सुद्युम्नं वसुधाधिपम् ।
अभ्यगच्छन्महाबाहो लिखितः संशितव्रतः ॥ ११
सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतम् ।
अभ्यगच्छत्सहामात्यः पद्भ्यामेव नरेश्वरः ॥ १२
तमब्रवीत्समागत्य स राजा ब्रह्मवित्तमम् ।
किमागमनमाचक्ष्व भगवन्कृतमेव तत् ॥ १३
एवमुक्तः स विप्रर्षिः सुद्युम्नमिदमब्रवीत् ।
प्रतिश्रौषि करिष्येति श्रुत्वा तत्कर्तुमर्हसि ॥ १४
अनिसृष्टानि गुरुणा फलानि पुरुषर्षभ ।
भक्षितानि मया राजंस्तत्र मां शाधि माचिरम् ॥ १५

सुद्युम्न उवाच ।

प्रमाणं चेन्मतो राजा भवतो दण्डधारणे ।
अनुज्ञायामपि तथा हेतुः स्याद्ब्राह्मणर्षभ ॥ १६
स भवानभ्यनुज्ञातः शुचिकर्मा महाव्रतः ।

C. 12. 684
B. 12. 23. 34
K. 12. 23. 34

---

—[b]) V1 B Dn D2 3 6 8 -रोष (for कोप-) —[c]) K3 D1 कृत्वा (for त्वया) K2 5 D4 स्तेय कृतमिद तात —[d]) K2 M1 [अ]ददता —[f]) D7 स्वकर्म B Da Dn D2 3 5-8 T2 G1 कथयस्व (for प्रथ°) Da2 मे (for वै) — After 9, B3 (marg) ins

23* लिखितोऽथ तदा गत्वा भ्रातुर्वाक्येन चोदित ।
सुद्युम्नविषय राजन्नुवाचेदं सुदुःखित ।

10 Before 10, B3 ins लिखित उवाच —[a]) K1 Dn एवं हि, V1 Bo 1 2-4 D2 2 5 6 एवं मे; B2 Da D7 S एतन्मे; D1 corrupt (for एवेदं) —[b]) K4 कृते, M1 2 कृत —[c]) K1 तेन (for स्तेनं) V1 Bo ना (for मा) B3 Da1 [इ]इ; Da2 इ (for च) —[e]) Dn2 कारय- K2 D2 7 S चोरस्य —[f]) D1 सम, D2 यम (for मम) B2 Da नरेश्वर; D1 वराधिप, D5 नराधिपं (for °धिप)

11 Dn2 reads 11[ab] on marg —[b]) D5 सुद्युम्न V1 B Dn D2 2 6-8 स (Dn1 त) नराधिपं (D5 °प), M4 वसुधाधिप —[c]) K1 अभ्यगच्छं, D1 अभ्यागच्छन् V1 Bo-4 Dn S (except M4) महाभागो- —[d]) K4 सश्रित-, K5 ससित; Dn1 D2-5 8 शमित, D1 सगत (for संशित)

12 [a]) K2 4 D1 स्वनुपालेभ्य; K5 स्वय राजेंद्र, D5 तत्पालेभ्य, D5 (inf lin) T G1 तं तु पौरेभ्य, T1 G2-4 द्वारपालेभ्य, T2 स्वंतपालेभ्य, Ca cites अन्तपालेभ्य —[b]) D7 ज्ञात्वा (for श्रुत्वा) —[c]) T1 G2-4 अभ्यागच्छत्, M3 अभ्यगच्छन् D2 8 5 महाभाग, D4 महात्मानं, D2 महाबाहो (for सहामात्य) —[d]) K2 B2 D4 जनाधिप (B2 °प); K5 T1 G4 नराधिप, V1 Bo 1 2-3 Dn D2 3 5 6 8 M4 जनेश्वर, D7 T2 G1-3 नराधिप M1 2 प्रीत्या चैव जनेश्वर

13 [a]) K3 D1 शमात्मानं, K- महात्मानं; V1 B Da Dn D1-3 5-8 S समागम्य —[b]) K5 संशितव्रत; B Dn D2 3 6 8 धर्मवित्तमं D- T G राजा ब्राह्मणसत्तम —[d]) Dn2 D4 M2 4 भगवान् (D4 सर्वथा also) K2 D4 कृतवानसि B3 Da ते, B4 च (for तत्)

14 [a]) K2 5 B2 Da D4 7 S तु (for स) K3 5 B2 Da D4 ब्रह्मर्षि —[b]) B2 Da D7 S राजानम् (for सुद्युम्नम्) —[c]) K2 3 5 V1 B D S Cv प्रतिश्रुत्य, K4 प्रतिश्रुति (for °श्रौषि) Dn2 करिष्ये तु; Cv [अ]करिष्येति —[d]) Ś1 K1 श्रुत (for श्रुत्वा) M4 तं (for तत्)

15 [b]) Ś1 K1 भरतर्षभ, K2 4 नृपसत्तम, V1 Bo 1 2-3 Dn D2 3 5 6 8 मनुजर्षभ, B2 Da पृथिवीपते, D1 नृपसत्तम (for पुरुषर्षभ) —T1 om. (hapl.) 15[c]–16[d] —[c]) B- महाराजन्, Dn महाराज —[d]) D1 7 S (T1 om.) मा (for मां) K- Da1 साधि (for शाधि), — After 15, Ś1 K1 2 4 D1 read an addl. colophon

16 D3 om. the ref. T1 om. 16 (cf. v l 15) —[b]) K1 -धारिणे, D1 -दारिणी (for -धारणे) —[c]) T2 अनुज्ञातुम्; G1 अनुज्ञाम्, Cv °ज्ञायाम् (as in text) V1 ततो (for तथा) —[d]) K3 D4 राजा (for हेतु) D7 G1 M1 2 4 त्वां Ś1 ब्राह्मण प्रभु; K3 5 °णर्षभ, K2 D1 °ण प्रभो-

17 [a]) Ś1 अभ्यनुज्ञाता; K1 यद्यनुज्ञाता Cv as in text —[b]) B1 शुचिकामी, Cnp श्रुतकर्मा B2 Da समाहित K3 5 D4 गच्छ ब्रह्मन्यथेप्सितं —[c])

ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः १७
व्यास उवाच ।
छन्द्यमानोऽपि ब्रह्मर्षिः पार्थिवेन महात्मना ।
नान्यं वै वरयामास तस्माद्दण्डादृते वरम् ॥ १८
ततः स पृथिवीपालो लिखितस्य महात्मनः ।
करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥ १९
स गत्वा भ्रातरं शङ्खमार्तरूपोऽब्रवीदिदम् ।
धृतदण्डस्य दुर्बुद्धेर्भगवन्क्षन्तुमर्हसि ॥ २०
शङ्ख उवाच ।
न कुप्ये तव धर्मज्ञ न च दूषयसे मम ।
धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥ २१
स गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि ।
देवान्पितॄनृषींश्चैव मा चाधर्मे मनः कृथाः ॥ २२
व्यास उवाच ।
तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा ।
अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे ॥ २३
प्रादुरास्तां ततस्तस्य करौ जलजसंनिभौ ।
ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ ॥ २४
ततस्तमब्रवीच्छङ्खस्तपसेदं कृतं मया ।
मा च तेऽत्र विशङ्का भूद्दैवमेव विधीयते ॥ २५

---

B2 तु, D7 त्वां; G2 स्व (for त्व) — d) B2 Da च ते, D1 हित (for हि ते)

18 Bo D3 om the ref — a) K3 V1 Bo-3 D6 स च्छद्यमानो, K6 B1 6 Dn1 D2-6 8 M1-3 संछंद्यमानो, Da स च्छदमानो, Dn2 स्वच्छदमानो, D7 T चोछंद्य मानो, G1 3 4 सचोद्यमानो, G2 सछेद्यमानो, M4 स ह्रस्यमानो (for छन्द्यमानोऽपि) B1 महर्षि, T G1 3 4 M4 विप्रर्षि K2 4 D1 ब्रह्मर्षिश्छद्यमानोपि (by transp) — c) K3 नान्यत्र, K4 नान्ये वै, B1 नान्यस्त; D4 नान्यास्तु (corrupt), M1-3 नान्यत्र (for नान्य वै) K6 V1 Bo 2-5 Da D2 3 5 8 स, D6 स, D7 T G च; M4 तु (for वै) — D3 om (hapl) 18d–19c — d) K3 व्रत, T1 G2-4 पर (for वरम्).

19 D3 om 19abc (cf. v l 18). B1 om. 19a–20b — a) K6 करौ प्रक्षेद; Dn2 स करौ छेद; G1 करौ प्रच्छाद — d) Da1 धनदडो K1 कृतागस (for जगाम स)

20 B1 om 20ab (cf. v l 19) — c) T1 G2-4 भगवन् (for दुर्बुद्धेर्) B2 धृतदंडोसि दुर्बुद्धिर् — d) Dn1 भवास्तव, D4 भगवान्; T1 G2-4 मम त्व (for भगवन्)

21 D8 om the ref — b) Dn त्व; D2 8 स; D8 त[द्] (for च) Ś1 श्रमयसे, K1 corrupt (for दूष) — After 21ab, S ins .

29* सुनिर्मल कुलं ब्रह्मन्नस्मिञ्जगति विश्रुतम् ।

— c) K3 D4 तात; M त्वया (for तु ते) D7 T1 G2-4 धर्मस्त्वया हतो भूयास; T2 त्वयाधर्मो कृतो भूयांस; G1 अधर्मस्त्वया कृतो भूयास (hypermetric) — d) K3 D4 तत्र, D5 तेन, D8 कृतास (for ततस्) Da1 निक्रिति ; Ca निष्कृति (as in text)

22 a) Ś1 बाहुर्जा D7 स्नात्वा (for शीघ्रं) — c) K3 5 B D S ऋषीन्पितॄश् (by transp) — d) D2 भ्रातधर्मे (for मा चाधर्मे) D8 G3 कृता — After 22, S ins

30* ब्रह्महत्यां सुरापान स्तेयं गुर्वङ्गनागमम् ।
महान्ति पातकान्याहु सयोग चैव तै सह ।
न स्तेयसदृश ब्रह्मन्महापातकमस्त्युत ।
जगत्यस्मिन्महाभाग ब्रह्महत्यासम हि तत् ।
सर्वपातकिना ब्रह्मन्दण्ड शारीर उच्यते । [5]
तस्करस्य विशेषेण नान्यो दण्डो विधीयते ।
ब्राह्मण क्षत्रियो वापि वैश्य शूद्रोऽथ वा द्विज ।
सर्वे कामकृते पापे हन्तव्या न विचारणा ।
राजभिर्धृतदण्डा वै कृत्वा पापानि मानवा ।
निर्मला स्वर्गमायान्ति सन्त सुकृतिनो यथा । [10]
उद्धृतं न कुल ब्रह्मन्नाज्ञा दण्डे धृते त्वयि ।

[(L 1-2) Cf. Manu 11 54 —(L 3) T1 G2 4 ह, G3 हि (for [उ]त) —(L 9-10) cf. Manu 8 318]

23 V1 D3 S om the ref — a) D6 8 ततस् (for तस्य) Bo [ए]तद् (for तद्) — b) K3 Bo Da1 D2 7 T2 G3 4 M4 °तस्तथा, G2 °तस्य च (for °तस्तदा)

24 ab) D7 S करौ तस्य (G3 °स्या) ततो (by transp) — c) T1 G2-4 सविस्मयो, G1 सुविस्मितो

25 b) K3 मया कृत (by transp). — c) B1 ते

लिखित उवाच ।

किं नु नाहं त्वया पूतः पूर्वमेव महाद्युते ।
यस्य ते तपसो वीर्यमीदृशं द्विजसत्तम ॥ २६

शङ्ख उवाच ।

एवमेतन्मया कार्यं नाहं दण्डधरस्तव ।
स च पूतो नरपतिस्त्वं चापि पितृभिः सह ॥ २७

व्यास उवाच ।

स राजा पाण्डवश्रेष्ठ श्रेष्ठो वै तेन कर्मणा ।
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ २८
एष धर्मः क्षत्रियाणां प्रजानां परिपालनम् ।
उत्पथेऽस्मिन्महाराज मा च शोके मनः कृथाः ॥ २९
भ्रातुरस्य हितं वाक्यं शृणु धर्मज्ञसत्तम ।
दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम् ॥ ३०

इति श्रीमहाभारते शान्तिपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

# २५

वैशंपायन उवाच ।

पुनरेव महर्षिस्तं कृष्णद्वैपायनोऽब्रवीत् ।
अजातशत्रुं कौन्तेयमिदं वचनमर्थवत् ॥ १
अरण्ये वसतां तात भ्रातृणां ते तपस्विनाम् ।

C. 12. 699
B. 12. 24. 2
K. 12. 24. 2

---

तत्र, Dn1 तत्र वि (for तेऽत्र वि) D2 8 5 8 विशका मा च तेत्रासूद् — d) K3 5 V1 B Da Dn D2 8 5 6 T2 दैवमत्र, D4 7 T1 G M एवमत्र (for दैवमेव) D7 विधीयता

26 D8 om the ref — a) K8 D4 हंत, K5 B3 Da Dn2 D2 7 Cv (also as in text) किं नु, D8 किल (for किं नु) — b) B2 Da कृतपूर्वं महामते — c) Da तपसा — d) K3 B2 Da मुनिसत्तम

27 D8 om. the ref. Dn2 वैशंपायन (for व्यास) — a) Da एतमे (Da2 °न्मे) तन्, G1 M4 एवमेव, M2 °मेव (for °मेतत्) Bo Da महाकार्यं; D7 S त्वया कार्यं — d) Dn2 तं चापि, M2 त्वयापि (for त्व चापि)

28 D8 om the ref — a) V1 भरतश्रेष्ठ, B1 2 5 D3 5 7 T1 G2 3 पाडवश्रेष्ठ — b) K3 6 V1 Bo 1 3-5 D2 3-5 8 श्रेयान्वै तेन, K4 ज्येष्ठो वै तेन, B2 श्रेया ञ्वैतेन, Dn S श्रेयानेतेन, D7 श्रेयो नेतेन (for श्रेष्ठो वै तेन) — cd) = 12 23 16cd

29 a) M1 एव (for एष) Ś1 K1 4 D1 क्षत्रियस्य — b) D6 °पालित — K8 om (hapl) 29c–30d Da om 29cd — c) K5 V1 B Dn D2-6 उत्पथोन्यो; D7 S उत्पथेस्यो; D8 उत्पायोन्यो (for उत्पथेऽस्मिन्)

M महीपाल — d) K3 5 V1 B D (except D1, Da om) S स्म (for च)

30 K3 om 30 (cf v 1 29) — a) Da भ्रातुरस्य (for भ्रा°) — b) G1 कुरु (for शृणु) B3 Da D2 8 5 8 धर्मभृता वर (D2 °र), D7 T G पाडव तत्वत, M1 3 धर्मज्ञ तत्वत — c) Ś1 दड एव तु, K1 दड एव तु, T1 दंडं तव हि — d) B3 क्षत्रियस्य (for क्षत्रधर्मो) K1 क्षत्रधर्मे तु मडनं, V1 (marg as in text) क्षत्रधर्मस्य मडन, Da क्षात्रो धर्मपरो मत Ca cites न मुण्डनम् (as in text) Cap मडनं

Colophon. — *Sub-parvan* N (except D8) T G1. 3 M राजधर्म — *Adhy name* Dn व्यासवाक्य, D7 सुद्युम्नलिखितसवाद, T1 G3 4 सुद्युम्नशखलिखितसवाद, G1 शंखलिखितसवाद, M1-3 शखलिखितोपाख्यानं — *Adhy no* (figures, words or both) K6 B2-4 Dn D2 7 23, D8 22, S 24 (as in text) — *Śloka no* Dn1 47, D8 37

## 25

1 D8 om the ref — b) Dn2 मुनि, D7 (by corr) [s]र्थवत् (for ऽब्रवीत्) — K2 reads 1st twice — d) Ś1 (before corr) B1 Dn D7 G3 अब्र वीत्, K4 अब्रुवन् (for अर्थवत्)

मनोरथा महाराज ये तत्रासन्युधिष्ठिर ॥ २
तानिमे भरतश्रेष्ठ प्राप्नुवन्तु महारथाः ।
प्रशाधि पृथिवीं पार्थ ययातिरिव नाहुषः ॥ ३
अरण्ये दुःखवसतिरनुभूता तपस्विभिः ।
दुःखस्यान्ते नरव्याघ्राः सुखं त्वनुभवन्त्विमे ॥ ४
धर्ममर्थं च कामं च भ्रातृभिः सह भारत ।
अनुभूय ततः पश्चात्प्रस्थातासि विशां पते ॥ ५
अतिथीनां च पितॄणां देवतानां च भारत ।
आनृण्यं गच्छ कौन्तेय ततः स्वर्गं गमिष्यसि ॥ ६

सर्वमेधाश्वमेधाभ्यां यजस्व कुरुनन्दन ।
ततः पश्चान्महाराज गमिष्यसि परां गतिम् ॥ ७
भ्रातॄंश्च सर्वान्क्रतुभिः संयोज्य बहुदक्षिणैः ।
संप्राप्तः कीर्तिमतुलां पाण्डवेय भविष्यसि ॥ ८
विद्म ते पुरुषव्याघ्र वचनं कुरुनन्दन ।
शृणु मत्त्व यथा कुर्वन्धर्मान्न च्यवते नृपः ॥ ९
आददानस्य च धनं निग्रहं च युधिष्ठिर ।
समानं धर्मकुशलाः स्थापयन्ति नरेश्वर ॥ १०
देशकालप्रतीक्षे यो दस्योर्दर्शयते नृपः ।

---

2 Cf. 12 14 8–11 — a) K1 2 4 B2 Da D1 तत्र (for तात) — b) V1 Bo 1 3–5 Dn D2 3 5 6 8 मनास्विनां; B2 Da तर° (for तप°) — c) K1 मनोरथे; G4 °रथो; M1 °रथ (for °रथा) — d) K4 तदा (for तत्र)

3 D2 om 3$^a$–6$^a$ — a) B2 Da °श्रेष्ठा — b) K2 प्राप्नुवंतो, K4 °वंत; Dn2 D7 M1 3 °वंति (for °वन्तु). — d) V1 यजातिर् K5 पार्थिव (for नाहुष)

4 D2 om 4 (cf v l 3) — a) K3 V1 Dn2 °वसतीर् — b) V1 अनुभूतास् — c) Dn2 दुःख-स्यांतं K5 V1 Da Dn D7 S नरव्याघ्र (V1 °व्याघ्र; Da °श्रेष्ठा) — d) K2 4 सुख चानु, K3 5 V1 B Dn3 D3–8 S सुखान्यनु; D1 सुखं चानु. K3 D4 °वसत्विमे; V1 Bo 1 3–5 Dn D3 5–7 G1 -भवंतु वै (D5 ते; D7 G1 मे), D3 M3 4 -भवति मे (D8 वै).

5 D2 om 5 (cf v l 3) — b) K3 5 D4 M2 (before corr) पार्थिव (for भारत). — D4 om (hapl.) 5$^c$–6$^b$. — d) D7 S प्रस्थास्यसि; Ca °तासि (as in text) B2 Da नराधिप (for विशां पते)

6 D2 om 6$^a$, D4 om 6$^{ab}$ (cf v l 3, 5) — a) Dn अर्थिनां च (for अतिथीनां) K2–5 B Da Dn3 D1 3 5–8 T G2–4 M पितॄणां च (by transp), G3 पवित्रां च — b) K3 पार्थिव — c) Da1 अरण्य (for आनृण्यं) D6 राजेंद्र (for कौन्तेय) — d) B2 Da अवाप्स्यसि (for गमिष्यसि) V1 Bo 1 3–5 Dn D2 3 5 6 8 तत सर्वं (Dn तत्सर्वं च) करिष्यसि

7 M1 3 om (hapl) 7–8 — a) D4 तथा च सर्व-मेधाभ्यां — b) Da नृपसत्तम; D7 T G M2 4 कुरु पुंगव — d) D4 6 गमिष्यति, G3 गमिष्यामि

8 M1 3 om 8 (cf v l. 7) — ab) B2 Da संयोज्य क्रतुभिर् (by transp) D4 8 सयाज्य B2 Da भूरि (for बहु) — c) D7 T G M4 सप्राप्य (for °प्र°) K3 om from मतुलां up to कुर्व (in 9$^c$) — d) Da D7 S (M1 3 om) गमिष्यसि

9 K3 om up to कुर्व (cf v l 8) — a) Ś1 K (K3 om) V1 B5 Dn2 D1–3 5 6 विद्मस्ते, B1 D8 T G3 4 विद्यते; B2 Da1 विग्रहे, Da2 विग्रहे, Dn1 निंद्यते; D4 विग्रस्ते, D7 विहृते — b) K5 B Da D2 3 5 6 8 कुरुसत्तम, D7 T G °पुंगव — c) K1 शृणुमश्च; K2 4 5 Bo 1 3–5 D1–6 8 शृणु चैव, B2 Da D7 T G M2 4 शृणुष्व त्व, Dn शृणुष्वैवं; M1 3 कुरुष्व च (for शृणु मत्त्व as in Ś1 only) D7 T2 G1 यथापूर्वं — d) Dn न धर्माच्; T2 धर्मांश्च K4 B3 Dn2 D2 च्यवसे; D7 S चलसे (T2 लभसे) K4 B1 3–5 Dn D2 3 5 7 8 S नृप Da धर्मार्थं लभते नर.

10 a) D2 3 6 M1 3 आददानं च (for °दानस्य) K5 B Da Dn D1–5 7 8 T G2–4 M विजयं; D6 निचयं; G1 विषयं K3 विजय आददानस्य — b) B2 Dn2 D3 विग्रह, D6 निइति (for निग्रहं) — c) K4 B (except B2) Dn D2 3 5–8 T G1 3 4 समान — d) K4 D1 स्नापयति K3 D1 नरेश्वरे; V1 B (except Bo) D3 5–7 S Cnp °श्वर, Da °श्वरा — After 10, D7 S ins

31* प्रत्यक्षमनुमानं च उपमानं तथागमं ।
अर्थापत्तिस्तथैतिह्य संशयो निर्णयस्तथा ।
आकारो हीङ्गितश्चैव गतिश्चेष्टा च भारत ।
प्रतिज्ञा चैव हेतुश्च दृष्टान्तोपनयस्तथा ।
उक्तिर्निगमन तेषां प्रमेय च प्रयोजनम् । [5]

शास्त्रजां बुद्धिमास्थाय नैनसा स हि युज्यते ॥ ११
आदाय बलिषड्भागं यो राष्ट्रं नाभिरक्षति ।
प्रतिगृह्णाति तत्पापं चतुर्थांशेन पार्थिवः ॥ १२
निबोध च यथातिष्ठन्धर्मान्न च्यवते नृपः ।
निग्रहाद्धर्मशास्त्राणामनुरुध्यन्नपेतभीः ।
कामक्रोधावनादृत्य पितेव समदर्शनः ॥ १३
दैवेनोपहते राजा कर्मकाले महाद्युते ।
प्रमादयति तत्कर्म न तत्राहुरतिक्रमम् ॥ १४
तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः ।
पापैः सह न संदध्याद्राष्ट्रं पण्यं न कारयेत् ॥ १५
शूराश्चार्याश्च सत्कार्या विद्वांसश्च युधिष्ठिर ।
गोमतो धनिनश्चैव परिपाल्या विशेषतः ॥ १६

C. 12 714
B 12. 24. 17
K. 12. 24 20

---

एतानि साधनान्याहुर्बहुवर्गप्रसिद्धये ।
प्रत्यक्षमनुमानं च सर्वेषा योनिरिष्यते ।
प्रमाणज्ञो हि शक्नोति दण्डयोनौ विचक्षण ।
अप्रमाणवता नीतो दण्डो हन्यान्महीपतिम् ।
[ (L. 2) M1-3 अवेषा — (L 8) M दर्शनौ ]

11 $^{a}$) G1 देशकालौ K4 B Dn D1 8 5 6 8 प्रतीक्षी यो ( Dn2 °क्षिणो ), K5 D4 -प्रतीक्ष्यो वै ( D4 यो ), V1 प्रतीक्षा यो, D7 T1 G2-4 M प्रतीक्षो य , T2 G1 °क्षेद्य — $^{b}$) K3 5 V1 B2-5 Dn D1-6 8 दस्यून् ( K3 D4 दस्यो, K5 हतो, B1 दस्युर्, D5 नश्नून् (sic) मर्पयते ( Dn2 °से ), K4 दस्यून्दर्शयते, Bo दश्यून्मर्पयते, D7 S शत्रून्नान्मर्प( D7 G3 °न्मृप , T1 °मर्प , G2 °न्हर्प ) येन् Dn D4 7 T G M2 नृप — N ( except D7, K3 om. ) repeats 11$^{cd}$ after 13 — $^{c}$) K1 ( both times ) D4 ( second time ) शास्त्रजां, K3 5 D4 ( all first time ) शास्त्रजो — $^{d}$) V1 ( first time ) युज्यते नैव सा हित (sic), V1 Bo 1 3-5 D2 3 5 6 8 ( all second time ) नैनसा सोनुयुज्यते, Bo 1 3-5 D3 5 6 ( all first time ) युज्यते नेनसा स ह, B2 ( first time ) युज्यते नैनसा विभो, B2 ( second time ) न स युज्येत एनसा, Da ( both first time ) न युज्येते( Da2 °ते )नसा विभो, Da ( both second time ) न स युज्यत एव सा, Dn ( both both times ) युज्यते नैनसा हि स, D2 3 ( both first time ) युज्यते नैव सा सह, S सयुज्येतं( T1 °ज्यते ; G3 °ज्यैतं , G4 °ज्येतं )नसा न स ( T2 हि स ) Cv सर्वेषा योनिरुच्यते

12 K3 om 12-13. — $^{a}$) D7 T2 G1 M2 आददत्, G2-4 M1 3 4 आददद् K4 बलिसर्वांग, Ca °षड्भाग ( as in text ) — $^{b}$) G1 राष्ट्रान् G3 -गच्छति ( for °रक्षति ) — $^{cd}$) K5 V1 Bo 1 3-5 Dn D2 3 6-8 भूमिप, G4 M4 पार्थिव B2 Da चतुर्थांशेन पापस्य नृप ममनुलिप्यते

13 K3 om 13 (cf v 1 12) — $^{a}$) D7 न योगे ( for निबोध ) D2 तथा ( for यथा ) D4 राजन् ( for [आ]तिष्ठन् ) — $^{b}$) = 9$^{d}$ K. धीमाश्च, Bo 1 3 5 D2 3 5 न धर्माच्, B2 Da धर्मार्थं, T G1 4 M2 4 धर्म्याश्च, G3 धर्म्यं च, M1 3 ध्यायन्न B2 Da G3 लभते; D7 T G1. 2 4 M चलते ( for च्यवते ) D7 S पय ( for नृप ) — $^{c}$) D4 निग्रहान् — $^{d}$) K1 Bo 1 3-5 अव ; Dn D3 6 अनि , S अवि ( for अनु ) D1 °धी; D4 भा ( for भी ) D7 आविरुध्य न चेतसि — After 13, N ( except D7, K3 om ) repeats 11$^{cd}$

14 $^{a}$) T2 G1 दैवाद्, G2 देवेन ( for दैवेन ) K3 4 D1 [उ]पहतो, K3 5 V1 B Da Dn D2-8 T2 G1 M1-3 [अ]भ्याहतो ( D7 G1 °ते ), T1 G2-4 M4 [अ] भ्यागतो ( for [उ]पहते ) — $^{b}$) Da1 धर्मकाले, T1 कर्मकालो K3 महायते, Da महीयते, T2 G1 विशां पते — $^{c}$) Ś1 K1 D1 प्रसाधयति; K2 3 V1 Bo 1. 3-5 Dn D2-6 8 न साध K3 8 V1 Bo 1 3-5 Dn D2 3. 5. 6. 8 यत् ( for तत् ) B2 Da D7 S यत्न साधयते कर्म — $^{d}$) D7 S व्यतिक्रम ( D7 °म )

15 $^{a}$) G1 स्वा ( for वा ) — $^{b}$) V1 reads from ग्राह्या ( in 15$^{b}$ ) up to परि ( in 16$^{d}$ ) on marg K4 B2. 3 D2 3 5 8 T2 निगृह्या, D4 निनाह्या; G1 निग्रह्या — $^{d}$) D5 7 T G2 M राष्ट्र , G3 दृष्ट्रा ( for राष्ट्र ) Ś1 K ( except K3 ) V1 B D ( except D4 ) M2 पुण्यं च ( D7 न ), T2 पत्य न, G2 3 पश्यन्न, M3 पण्यं च; M4 corrupt

16 V1 reads up to परि ( in $^{d}$ ) on marg — $^{ab}$) D7 शूराद्धर्म्याग , T G शूरान्धर्मा( T1 °र्म्यां , G1 °र्म्या )श्च D7 T1 G सत्( D7 G3 स )कुर्याद् B1 विद्वांसोपि, T1 G3 4 °स च D3 सक्ता युक्तोपि नैव ( for सत्कार्या विद्वांसश्च ) B2 Da नराधिप ( for युधिष्ठिर ) — $^{c}$) K1 गोवमो, K4 5 B Da Dn D1 5 T1 G2 3 M Cv गोमिनो, V1 गोमानि, D2 3 6 8 योगिनो; D4 यागिनो; D7 G4 गोमंतो, T2 G1 भोगिनो ( for गोमतो )

17 $^{a}$) T2 G1 व्यवहारे च K5 V1 B Da Dn D1-6 8 धर्मेषु, D7 S योक्तव्याश्( G1 °श्यश् ) — $^{b}$) K3 5 V-

12

C 12.715
B. 12.24.18
K 12.24.21

व्यवहारेषु धर्म्येषु नियोज्याश्च बहुश्रुताः ।
गुणयुक्तेऽपि नैकस्मिन्विश्वस्याच्च विचक्षणः ॥ १७
अरक्षिता दुर्विनीतो मानी स्तब्धोऽभ्यसूयकः ।
एनसा युज्यते राजा दुर्दान्त इति चोच्यते ॥ १८
येऽरक्ष्यमाणा हीयन्ते दैवेनोपहते नृपे ।
तस्करैश्चापि हन्यन्ते सर्वं तद्राजकिल्बिषम् ॥ १९
सुमन्त्रिते सुनीते च विधिवच्चोपपादिते ।
पौरुषे कर्मणि कृते नास्त्यधर्मो युधिष्ठिर ॥ २०
विपद्यन्ते समारम्भाः सिध्यन्त्यपि च दैवतः ।
कृते पुरुषकारे तु नैनः स्पृशति पार्थिवम् ॥ २१
अत्र ते राजशार्दूल वर्तयिष्ये कथामिमाम् ।
यद्वृत्तं पूर्वराजर्षेर्हयग्रीवस्य पार्थिव ॥ २२
शत्रून्हत्वा हतस्याजौ शूरस्याक्लिष्टकर्मणः ।
असहायस्य धीरस्य निर्जितस्य युधिष्ठिर ॥ २३
यत्कर्म वै निग्रहे शात्रवाणां
योगश्चाग्र्यः पालने मानवानाम् ।

---

B Da Dn D2–6 8 योक्तव्याश्च (K6 योक्तव्या सु-; Da1 योव्यक्ताश्च), D7 G3 4 पृष्टव्याश्च, T1 G1 2 M1 8 4 प्रष्टव्याश्च; T2 M2 द्रष्टव्याश्च (for नियोज्याश्च) —After 17ab, D7 S Cv ins

32* प्रमाणज्ञा महीपाल न्यायशास्त्रावलम्बिन ।
वेदार्थतत्त्वविद्राजस्तर्कशास्त्रबहुश्रुत' ।
मन्त्रे च व्यवहारे च नियोक्तव्यो विजानता ।
तर्कशास्त्रकृता बुद्धिर्धर्मशास्त्रकृता च या ।
दण्डनीतिकृता चैव त्रैलोक्यमपि साधयेत् । [5]
नियोज्या वेदतत्त्वज्ञा यज्ञकर्मसु पार्थिव ।
वेदज्ञा ये च शास्त्रज्ञास्ते च राजन्सुबुद्धय ।
आन्वीक्षिकीत्रयीवार्तादण्डनीतिषु पारगा ।
ते तु सर्वत्र योक्तव्यास्ते च बुद्धे' परां गता ।

[(L 2) D7 °बहिष्कृता, T1 G2 8 °बहुश्रुता' —(L 3) D7 G3 4 नियोक्तव्या. —(L 9) D7 M3 तेषु, G2 ते च, M2 तेपि (for ते तु) T M1 पर गता ]

—c) D4 गुणयुक्तोपि —d) K1 4 विश्वस्याश्च, K2 3 V1 Bo 1 3–5 Dn D2 5 6 8 T2 M1 °सेत; K6 °सेन्न, B2 Da2 T1 G M1–3 °सीत, Da1 °सीति, D4 विश्रसेत, D7 प्रसीदति (for विश्वस्याच्च) K2 M2 विचक्षणा' (M2 °णै)

18 a) D1 दुर्विनीता —b) K3 भूता, D4 भूतो (for स्तब्धो) Ś1 K1 Da1 T2 [ऽ]नसूयक', K4 D1 7 T1 G1 3 4 M1–3 ह्यसूयक' (M2 °यिता), Bo 2 [ऽ]सुसू°, B4 damaged, Da2 [ऽ]नरूपक (sic) —c) T2 राजन् —d) D1 दुर्मात G1 इव (for इति)

19 a) K1 [ऽ]रक्ष्यमाणा; K3 4 V1 Da G2 [ऽ]रक्षमाणा K1 हीयर्ता —b) T1 G2 देवेन, Cv as in text K1 [उ]पहतो, K3 corrupt, K5 V1 B Da Dn D2 3 5–8 S Cv [अ]भ्याहता (B1 °हते, T1 G2 °गता) K6 V1 B Da Dn D2 3 5 8 S Cv नृप; (T2 नरा; G1 नृपा) —c) K3 Da D4 M2 4 चाव; B2 चाम्य, T1 G1 2 4 M1 3 चाप- (for चापि) K3 5 V1 Bo 4 5 Dn1 D2–4 6–8 S मृद्यते, B1 युज्यंते, B2 -सूयंते, B3 D5 मुह्यते, Da1 -मृद्यते, Da2 मद्यते, Dn2 हीयते (for हन्यन्ते) —d) K2 4 D1 T2 तत्सर्व (by transp), D7 सर्वतो

20 a) D1 सुसधिते, D2 सुमंत्रते, D5 समंत्रिते D7 सुनीतौ. —b) K3 D4 S न्यायतश्, K5 V1 B Da Dn D2 3 5–8 सर्वशश् (for विधिवच्) D7 -पातिते —D2 om 21c —d) B2 Da महीपते, D6 नरर्षभ (for युधिष्ठिर)

21 K3 B4 om 21, V1 om 21ab —a) Ś1 K1 4 विपद्यते; K2 विपच्यते, Dn1 विच्छिद्यते, D7 विपद्येते Ś1 समारब्धा, B2 Da S च कर्माणि, D7 [ऽ]स्य कर्माणि (for समारम्भा) —b) K1 lacuna, B2 Da न (for च) K5 Bo 1 3 5 D6 धर्मत; D2 3 5 8 कर्मत D7 M2 दैवतात्, T G देवता; M1 3 दैवतै (for दैवत) Ś1 K1 2 4 सिध्यत्यपि (Ś1 [inf lin.] सिद्धाभ्यपि) च देवता, Dn सिध्यते चापि दैवत, D4 सिध्यतापि नृदेवत —c) K1 corrupt, V1 D6 7 T G च, D4 तु (for तु) —d) V1 M1 3 नैन (for नैन') G1 2 M1 पार्थिव, M2 पार्थिव'

22 a) B1 T2 तत्र T2 नृपशार्दूल —b) Ś1 (by corr) K2 4 5 D1 वर्णयिष्ये, B2 Da D7 S कथयिष्ये —c) B1 T2 यदुक्त, Da1 यद्वृत्त —d) K3 V1 B (except B2) Dn D2 6 8 पाडव (for पार्थिव).

23 a) K5 Bo 2 Da D3 5 शत्रु D7 हतस्यासौ. —c) K3 D4 S वीरस्य, K5 V1 B Da Dn D2, 3 5 6 8 समाने (for धीरस्य).

कृत्वा कर्म प्राप्य कीर्तिं सुयुद्धे
वाजिग्रीवो मोदते देवलोके ॥ २४

संत्यक्तात्मा समरेष्वाततायी
शस्त्रैश्छिन्नो दस्युभिरर्द्यमानः ।
अश्वग्रीवः कर्मशीलो महात्मा
संसिद्धात्मा मोदते देवलोके ॥ २५

धनुर्यूपो रशना ज्या शरः स्रु-
क्स्रुवः खड्गो रुधिरं यत्र चाज्यम् ।
रथो वेदी कामगो युद्धमग्नि-
श्चातुर्होत्रं चतुरो वाजिमुख्याः ॥ २६

हुत्वा तस्मिन्यज्ञवह्नावथारी-
न्पापान्मुक्तो राजसिंहस्तरस्वी ।
प्राणान्हुत्वा चावभृथे रणे स
वाजिग्रीवो मोदते देवलोके ॥ २७

राष्ट्रं रक्षन्बुद्धिपूर्वं नयेन
संत्यक्तात्मा यज्ञशीलो महात्मा ।
सर्वाँल्लोकान्व्याप्य कीर्त्या मनस्वी
वाजिग्रीवो मोदते देवलोके ॥ २८

दैवीं सिद्धिं मानुषीं दण्डनीतिं
योगन्यायैः पालयित्वा महीं च ।
तस्माद्राजा धर्मशीलो महात्मा
हयग्रीवो मोदते स्वर्गलोके ॥ २९

विद्वांस्त्यागी श्रद्दधानः कृतज्ञ-
स्त्यक्त्वा लोकं मानुषं कर्म कृत्वा ।

C 12 722
B. 12 24 31
K. 12 24 39

---

24 a) B2-4 यत्र (for यत्) Dn1 वेति ग्रहे, D7 S (except D1 विनिग्रहे — b) D1 योगश्चारा, B3 पावनो B1 मास G3) योग चाऽय (M1 3 चोऽय) V1 B3 (marg) नाना — c) K2 प्राप (for °प्य) B3 D2 Dn D6 स युद्धाद्, Bo 1 8 5 Da सुयुद्धाद्; T1 G प्रयुद्धे — d) 2. 8 3 सुयुद्धा, B1 सुमृद्धा, D7 चैव लोके K3. 5 V1 B Dn D2 3. 5 6 8 स्वर्गलोके, — a)

25 B1 om. 25 V1 reads 25 on marg K3 कोश त्यक्त्वा, D1 काश त्यक्त्वा (for संत्यक्तात्मा). D1 समरे Bo 4 D3 5 6 8 न(B1 D6 स)रणेष्वाततायी, — b) Dn1 °प्राठ°, T1 G °रे चाततायी (G1 °यि-) T1 शस्त्राच्छिन्नौ, D1 शस्त्रैश्छन्नो, D7 शस्त्रकेना (sic), K3 5 V1 B (B1 om) T2 शस्त्रैर्भिन्नौ K1 भ्यमान, D1 याध्य°, D4 रुध्य°; Da Dn D2 3. 5 6 8 वध्य, — c) D4 हयग्रीव D7 D7 S युध्य° (for अर्द्य°) — d) K3 D4 7 T2 सत्य° T G पुण्य (for कर्म) D2 समिध्यात्मा, D6 °क्तात्मा, Dn1 D8 ससिद्धार्थो, K5 V1 B (B1 om.) समिध्यन्यात्मा (for संसिद्धात्मा) D4 T1 G3 4 जीव° (for देव°) Dn D2 3. 6 8 स्वर्गलोके,

26 a) B1 यूपध्वजा** (for यूपो रशना ज्या) D4 थूपा (for यूपो) V1 B3 5 रथेध्मा, Bo 4 रथेध्म, B3 (by corr) Da D6 रसना, Cv रशना (as in text) M3 [आ]ज्य (for ज्या) V1 Bo शर, D7 शरा° V1 Bo 1 D1 स्रुक्, Da1 तु, D4 lacuna, G1. 2 स्रक् (for स्रुक्) — b) Bo 1 स्रुव°; D1 श्रव°, M1 3 स्रव D7 पङ्क्तो B2 Da तत्र (for यत्र) D1 राज्य (for चाज्यम्) — c) K1 वेची, D7 S (except T1) वेदि° K3 कामगा, V1 B3 Da कामतो, Bo 1 8 5 Dn1 D2 3 5 8 कामजो, D4 कामगे — d) K3 मुखा°, G1 °मुख्य

27 a) B2 Da2 तस्मिन्हुत्वा (by transp), Da1 corrupt D7 S आजि (for यज्ञ) T1 G2-4 M1 3 4 [अ]रातीन्, T2 यथारीन् — b) D1 पापैद्; D7 S पाशान् (for पापान्) D3 7 मुक्ता, T G3 3 M मुक्त्वा; G1 मत्वा (for मुक्तो) — c) G3 4 मुक्त्वा (for हुत्वा). K3 चावरुद्धो, D4 वाचरुद्धो, D7 चावभृथो. K3 D4 रणाग्रे, D7 T G2 M रणेषु, G1. 3 4 रथेषु (for रणे स) — d) Bo 1 Dn1 D2 3. 5 8 स्वर्गलोके, D7 जीव°.

28 a) Bo 1 4 राज्यं, Da2 राज Dn2 युक्त; G1 रक्षेद् (for रक्षन्) — b) Bo संयुक्तात्मा — c) K3 V1 M1 प्राप्य, D1 व्याप्य (for व्याप्य) — d) B1 जीवलोके; Da D5 8 स्वर्ग° (for देव°)

29 K5 om 29 — a) B1 G3 देवीं B3 Da मानवीं (for मानुषीं) T1 G1 2 4 दडनीत्या; G3 °रीत्या — b) K2 3 Bo 1 3 5 Dn D2 3 5 6 8 योग न्यासै, D1 यो न न्यायै, D4 योगन्यायौ — c) Dn1 यज्ञ, T2 पुण्य (for धर्म) — d) All MSS (except Ś1 K1, K5 om.) वाजिग्रीवो K2-4 B2-5 Da S देवलोके

30 a) K1 विश्वास B3 Da धर्मशील°; D1 ग्रह*ना

C 12. 732
B 12. 24 31
K 12. 24 30

मेधाविनां विदुषां संमतानां
तनुत्यजां लोकमाक्रम्य राजा ॥ ३०
सम्यग्वेदान्प्राप्य शास्त्राण्यधीत्य
सम्यग्राष्ट्रं पालयित्वा महात्मा ।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे
वाजिग्रीवो मोदते देवलोके ॥ ३१
जित्वा संग्रामान्पालयित्वा प्रजाश्च
सोमं पीत्वा तर्पयित्वा द्विजाग्र्यान् ।
युक्त्या दण्डं धारयित्वा प्रजानां
युद्धे क्षीणो मोदते देवलोके ॥ ३२
वृत्तं यस्य श्लाघनीयं मनुष्याः
सन्तो विद्वांसश्चार्हयन्त्यर्हणीयाः ।
स्वर्गं जित्वा वीरलोकांश्च गत्वा
सिद्धिं प्राप्तः पुण्यकीर्तिर्महात्मा ॥ ३३

इति श्रीमहाभारते शान्तिपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

## २६

वैशंपायन उवाच ।
द्वैपायनवचः श्रुत्वा कुपिते च धनंजये ।
व्यासमामन्त्र्य कौन्तेयः प्रत्युवाच युधिष्ठिरः ॥ १
न पार्थिवमिदं राज्यं न च भोगाः पृथग्विधाः ।

---

(for श्रद्धान°). T2 [अ]नसूयु° (for कृतज्ञ°) —b) Da लोकान्, G1 M1 3 4 लोभं —d) T1 तनु त्यक्त्वा (for तनुत्यजा). Da अक्रम्य, T2 आक्राम K3 राज्ञा; B2 Dn सम्यक्; G राज्ञा (for राजा).

31 a) B2 Da वेदान्सर्वान् (for सम्यग्वेदान्) M4 सर्वं (for प्राप्य) V1 दास्त्राणि (for शा°) —b) Da1 राष्ट्र, Dn राज्यं, D1 दृष्टं; D4 भ्रष्ट; D7 corrupt, T2 लोकं (for राष्ट्र) T3 प्रापयित्वा B1 om (hapl) from महात्मा up to तर्पयित्वा (in 32b) D6 प्रजां च (for महात्मा) —c) D7 T3 G3 पालयित्वा (for स्थाप°) —d) D8 om from वाजिग्रीवो up to सग्रामान् (in 32a) K3 4 B0 3-5 D1-3 5 स्वर्गलोके; Dn1 जीवलोके (for देव°)

32 K4 G2 om (hapl) 32 B1 om. up to तर्पयित्वा (of v l 31) D8 om जित्वा संग्रामान् (of v l 31) —a) D4 भित्त्वा K1 शत्रून्; D6 समग्रान्, D7 T G1 3 4 M3 4 सग्राम, M1 3 सग्रामे. B2 Da T2 M च राष्ट्र; D7 T1 सराष्ट्र; G1 3 4 स्वराष्ट्रं (for प्रजाश्च). —b) D4 सामं Da2 lacuna, Dn2 पालयित्वा (for तर्प°). G4 प्रजाग्र्यान् —c) Da1 युक्ता, Dn1 युक्त, D6 7 T G1 3 4 शक्त्या (for युक्त्या) Ś1 K1 Da द्विजानां, D8 जनाना (for प्रजानां). —d) T2 वाजिग्रीवो (for युद्धे क्षीणो) K3 राजा; D1 क्षीणे, M4 क्षीणायु (for क्षीणो) B0 1, 3 D6 8 स्वर्गलोके; D1 G3 जीव° (for देव°).

33 a) B2 Da1 धूर्त्ति, G4 युक्त; M1 वृत्ति (for वृत्त) B2 श्लाघनीयां —b) D1 सत्यो, D8 सतोपे (for सन्तो) K1 नित्य, *V1 विद्वासाश् (for विद्वांसश्) K3 5 M1 3 om च V1 अर्हति (sic) K2 3 5 V1 B Da1 Dn D2 3, 5-8 [अ]र्हणीय (B2 °यां) Ca cites अर्हयन्ति (as in text) —c) D7 सर्गे K3, 5 लब्ध्वा, D4 सख्या (for जित्वा) K3 D4 च जित्वा; K5 V1 B Da Dn D2 3 5-8 S अवाप्य (for च गत्वा). —d) D1 पुण्यलोक (for °कीर्तिर्)

Colophon —*Sub parvan* K2-5 V1 B Da Dn D1-7 T2 G1 2 M राजधर्म —*Adhy name* B2 वाजिग्रीवोपाख्यान, Dn व्यासवाक्य, D7 हयग्रीवप्रशंसा, T1 G हयग्रीवोपाख्यान, M1-3 अश्वग्रीवो°. —*Adhy no* (figures, words or both) K5 B3 4 Da1 Dn D2 24, B2 D8 23, D7 S 25 (as in text) —*Śloka no* Dn1 34, D8 33

## 26

1 K3 D8 om. the ref —a) B2 Da D7 T1 G M1-3 कौरव्य (for कौन्तेय°)

2 Before 2, K4 5 B (except B0) Da Dn D1-3

ते त्वया धर्महन्तारो निहताः सपदानुगाः ।
स्वधर्मे वर्तमानस्त्वं किं नु शोचसि पाण्डव ।
राजा हि हन्याद्दद्याच्च प्रजा रक्षेच्च धर्मतः ॥ ८

युधिष्ठिर उवाच ।

न तेऽभिशङ्के वचनं यद्ब्रवीषि तपोधन ।
अपरोक्षो हि ते धर्मः सर्वधर्मभृतां वर ॥ ९
मया ह्यवध्या बहवो घातिता राज्यकारणात् ।
तान्यकार्याणि मे ब्रह्मन्दहन्ति च तपन्ति च ॥ १०

व्यास उवाच ।

ईश्वरो वा भवेत्कर्ता पुरुषो वापि भारत ।
हठो वा वर्तते लोके कर्मजं वा फलं स्मृतम् ॥ ११
ईश्वरेण नियुक्ता हि साध्वसाधु च पार्थिव ।
कुर्वन्ति पुरुषाः कर्म फलमीश्वरगामि तत् ॥ १२
यथा हि पुरुषश्छिन्द्याद्वृक्षं परशुना वने ।
छेत्तुरेव भवेत्पापं परशोर्न कथंचन ॥ १३
अथ वा तदुपादानात्प्राप्नुयुः कर्मणः फलम् ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥ १४
न चैतदिष्टं कौन्तेय यदन्येन फलं कृतम् ।
प्राप्नुयादिति तस्माच्च ईश्वरे तन्निवेशय ॥ १५
अथ वा पुरुषः कर्ता कर्मणोः शुभपापयोः ।

C. 12. 1181
B. 12. 32. 17
K. 12. 31 17

---

K1 Dn1 D1 निनाश्यमान

8 a) K4 M3 4 चे; D3 तद् (for ते) D7 धर्म-हर्तारे —b) T2 हंसव्या (for निहता) —c) K3 स्वधर्मं; V1 D6 स्वे धर्मे K3 D5 तु (for स्वं) —d) D3 कस्माद् (for किं नु) —e) D7 T G नि (for हि) D5 वध्यांश्च; D7 अन्यांश्च (for द्द्याच्च). —f) M4 स्व (for च) —After 8, Ś1 K1 D1 ins. an addl. colophon

9 D3 om. the ref. —a) D5 7 S [ऽ]ति- (for ऽभि) —b) K6 पो (for ते) —d) B1 D (except D1. 5 7) M4 °विदां (for °भृता) V1 D3 वर

10 a) K3 5 V1 B D (except D1. 4) S त्वव (M1. 3 °ध्रु)ध्या (for ह्यवध्या). —b) T1 निहता (for घातिता) —c) K2 3 5 V1 B D S तानि (D1 °न्य-) कर्माणि (for तान्यकार्याणि). K6 D5 7 S माम्, D3 ये; Cn मे (as in text) K1 ब्रह्म, B2 D3 विप्र; D2 3 5 6 8 राजन्; D7 S ब्रह्म (for ब्रह्मन्) —d) D1 om the first च K1 देहं सर्वं; K4 गर्हंति च, B3 प्रदहति; D7 T G Cn पचति च (for दहन्ति च) K1 D7 T G दहति च, K6 तपोधन, V1 B3-5 D3 Dn2 D2 3 5 6 8 M पचति च, B0 1 पतंति च; Dn1 परंतप (for तपन्ति च)

11 D6 om. the ref. —a) D7 T1 G [ऽ]पि; T2 हि (for वा) —b) Ś1 K1. 3 4 D1 2 हतो वा; D3 पुण्यं वा; T1 G नापरो; T2 हरौ वा; Cv भद्रे वा (for हठो वा) Ś1 K1 D1 लोक —d) K1 हि; T2 यत् (for वा). B0 श्रुतं; B2 नृप; D3 नृप; D7 S नृषु (G1 शृणु); Cv स्मृतम् (as in text)

12 a) K2 D3 Dn D4 नि(D3 वि)युक्तो हि; K4 नियुक्तानि, G3 वियुक्ता हि —b) K2 4 V1 B D (except D5 7) भारत (for पार्थिव) —c) K2 Dn कुरुते; V1 B1 D6 कुर्वते K4 Dn पुरुष —d) K2 4 ईश्वरगामिन; K6 D3 D7 °गामि यत् Cv cites ईश्वरगामि

13 a) D3 1 D6 छिद्याद् —c) D3 छित्तुर्; D2 3 5 8 कर्तुर् (for छेत्तुर्) —d) K1 (marg, before corr as in text) परस्य (for परशोर्)

14 a) B1 तदुपादाना —b) K6 B2 3 5 D (except D1 4 6) S (except M1-3) प्राप्नुयात् (for °प्नुयु°) D1 M2 कर्मणां —14cd = 17cd —c) B3 D3 खड्गदण्ड- (D3 °ड्गे)कृतं; D1. 6 दण्डशास्त्र°; T1 G शस्त्रकर्म° —d) K6 पुरुषं D3 1 निवेद्यते (for न विद्यते)

15 K6 D8 om (hapl.) 15-17. —a) B1 चेत्तद्; Cv चैव (for चैतद्) M1. 3 दृष्ट —b) K1 यद्यन्येन; D1 यसत्येन (sic) V1 B (except B2) D (except D3 D1, D8 om) S (except M1. 3) transp फलं and कृतम् —c) V1 अपि, B2 D2 3 5 यदि (for इति). K2 3 Dn D1 4 यस्माच्च D2 3 5 वा, D6 मे (for च) —D6 om (hapl) 15d-16c —d) Ś1 K1. 4 V1 B1 3 4 D1-3. 5 M1. 3 [अ]पीश्वरे (for ईश्वरे) K3 4 सन्निवेद(K4 °श)येत्; D3 सनिवेशय (for तन्नि°)

16 K6 D8 om 16, D6 om. 16abc (cf. v l. 15) —a) V1 B1 (marg) तथा; B2 3 5 D3 T1 G1-3 —a) V1 यथा; G4 यत्र (for अथ) K3 [अ]स्ति, V1 B Dn D2 3. 5 M1-3 [अ]पि; D3 हि; D7 T1 G [अ]त्र; T2 तत् (for वा) —b) K3 कर्मणे; D1

न त्वं विद्यते तस्मादेवमन्यत्कुरु ॥ १६
न हि कश्चित्क्वचिद्राजन्दिष्टात्प्रतिनिवर्तते ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥ १७
यदि वा मन्यसे राजन्कृतं लोके प्रतिष्ठितम् ।
एवमप्यशुभं कर्म न भूतं न भविष्यति ॥ १८
क्रियाभिरभिनिर्वृत्तस्य कर्तव्या शुभपापयोः ।
अभिपन्नमिदं लोके राज्ञामुद्यतदण्डनम् ॥ १९
अद्यापि लोके कर्माणि समाचरन्ति भारत ।
शुभाशुभफलं प्रेत्य प्राप्नुवन्तीति मे मतिः ॥ २०
एवं सत्यं शुभादेशं कर्मणस्तत्फलं ध्रुवम् ।
त्यज तद्राजशार्दूल मैवं शोके मनः कृथाः ॥ २१
स्वधर्मे वर्तमानस्य सापवादेऽपि भारत ।
एवमात्मपरित्यागस्तव राजन्न शोभनः ॥ २२
विहितानीह कौन्तेय प्रायश्चित्तानि कर्मिणाम् ।
शरीरवांस्तानि कुर्यादशरीरः पराभवेत् ॥ २३
तद्राजञ्जीवमानस्त्वं प्रायश्चित्तं चरिष्यसि ।
प्रायश्चित्तमकृत्वा तु प्रेत्य तप्तासि भारत ॥ २४

इति श्रीमहाभारते शान्तिपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

# ३३

युधिष्ठिर उवाच ।

हताः पुत्राश्च पौत्राश्च भ्रातरः पितरस्तथा ।
श्वशुरा गुरवश्चैव मातुलाः सपितामहाः ॥ १
क्षत्रियाश्च महात्मानः संबन्धिसुहृदस्तथा ।
वयस्या ज्ञातयश्चैव भ्रातरश्च पितामह ॥ २
बहवश्च मनुष्येन्द्रा नानादेशसमागताः ।
घातिता राज्यलुब्धेन मयैकेन पितामह ॥ ३
तांस्तादृशानहं हत्वा धर्मनित्यान्महीक्षितः ।
असकृत्सोमपान्वीरान्किं प्राप्स्यामि तपोधन ॥ ४
दह्याम्यनिशमद्याहं चिन्तयानः पुनः पुनः ।
हीनां पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमाम् ॥ ५
दृष्ट्वा ज्ञातिवधं घोरं हतांश्च शतशः परान् ।
कोटिशश्च नरानन्यान्परितप्ये पितामह ॥ ६
का नु तासां वरस्त्रीणामवस्थाद्य भविष्यति ।
विहीनानां स्वतनयैः पतिभिर्भ्रातृभिस्तथा ॥ ७
अस्मानन्तकरान्घोरान्पाण्डवान्वृष्णिसंहितान् ।
आक्रोशन्त्यः कृशा दीना निपतन्त्यश्च भूतले ॥ ८
अपश्यन्त्यः पितॄन्भ्रातॄन्पतीन्पुत्रांश्च योषितः ।

C. 12. 1168
B. 12. 33. 9
K. 12. 31. 34

---

24 b) K5 V1 Dn D. करिष्यामि (for चरि°) —c) D7 T1 G M1 2 दै (for नु) —d) K1 दहामि, K2 5 D4 तप्स्यामि

Colophon addl. in Ś1 K1 D1 after 8, om. in D7 S —*Sub-parvan* N (except D7 8) राजधर्म —*Adhy name* V1 Dn2 D5 प्रायश्चित्तविधि°, Dn1 व्यासवाक्य —*Adhy no* (figures, words or both) K2 B1. 3 4 Da1 Dn D2 32 (as in text), D3 31 —*Śloka no* Dn1 25, D3 22

## 33

1 D3 om. the ref —a) G1 हत- (for हता) —c) D4 स्वसुरा (for श्वशुरा) —d) K3 5 V1 B (B4 damaged) D (except D1. 7) च (for स) M8 स पितामह°

2 a) D7 T G महाभागा (for °त्मान°) —b) G1 सबंधि°, M8 संबधी —c) K1 चान्ये (for चैव) K2 3 5 V1 B D (except D1) S वयस्या भागिनेयाश्च —d) K2 3. 5 V1 B D (except D1) S ज्ञातयश्च (for भ्रातरश्च) Ś1 K1. 4 D1 स- (for च) Ś1 K1 2 4 V1 B1 D1 7 G1-3 -पितामहा, B2 Da Dn2 D6 महामुने

3 D2 4 om. (hapl) 3 —a) D7 मनुष्येंद्र —d) B2 D7 S मयोग्रेण (for मयैकेन) Da2 T1 G1. 3 पिता मह (G3 °हा)

4 c) T2 G2 सोमपो (for सोमपान्) D4 वीर —d) K4 D1 प्राप्स्यसि

5 =(var) B 13 57 1 —a) K1. 4 D1 मुह्यामि (for दह्यामि) K2 3 V1 Bo 1. 3-5 Dn D2 3 5 6 8 M2 4 अद्यापि, B2 Da एवाहं (for अद्याह) —c) Ś1 K1. 4 D1 पुरुषसिंहैस्, K3 5 Bo 2-5 D2-5 8 पार्थिव सर्वैस् (for °सिंहैस्) K6 च (for तै°)

6 a) Da हत्वा (Da2 °ता) (for दृष्ट्वा) —b) K1 हतश्च, D1 °तश्च, D6 °ताश्च Ś1 K1 पर, M1-3 नरान्, M4 नृपान् (for परान्) —6cd =(var) B 13 57 2cd —c) B2 Da जनान् (for नरान्) T G1-3 अद्य (for अन्यान्) —d) K3 D4 परिदह्ये, Da °ताप्य, D7 T G M2 परि(M2 °र)तप्स्ये

7 =(var) B 13 57 3 —a) D7 G1 परस्त्री-णाम्, T2 पुरध्रीणाम् (for वरस्त्रीणाम्) —c) K2 Dn D7 T G तु, B1 D6 सु- (for स्व) —d) K3 Dn2 D4 M2 पितृभिर् (for पतिभिर्) K1 ज्ञातिभिस् (for भ्रातृभिस्)

8 b) K5 V1 B Dn वृष्णिसहितान्; M4 वृष्टिसंहि° —c) Da1 आक्रोशत°, M1 2 °शत्य° G1 दीनान् —d) V1 B Da Dn D2 3 5 6 8 प्रपतिष्यंति; G4 निप-तति च (for °तन्त्यश्च) K3 D4 भूतल

9 D1. 6 G2 M2 °इयंत° B2 Da प्रियान् (for पितॄन्) —b) D7 T1 G च भारत; T2 पितामह (for पितॄन्) —c) K1 transp च योषित°) —B1 om. 9c-10d —c) K4 B (B1 om.) Da Dn D2 त्यक्त्वा and प्राणान् D1 प्रिया (for प्रियान्) K3 D7 T 2 5 6 8 प्रिय-

C 12. 1169
B 12. 33. 9
K 12. 31. 34

त्यक्त्वा प्राणान्प्रियान्सर्वा गमिष्यन्ति यमक्षयम् ॥ ९
वत्सलत्वाद्द्विजश्रेष्ठ तत्र मे नास्ति संशयः ।
व्यक्तं सौक्ष्म्याच्च धर्मस्य प्राप्स्यामः स्त्रीवधं वयम् ॥ १०
ते वयं सुहृदो हत्वा कृत्वा पापमनन्तकम् ।
नरके निपतिष्यामो ह्यधःशिरस एव च ॥ ११
शरीराणि विमोक्ष्यामस्तपसोग्रेण सत्तम ।
आश्रमांश्च विशेषांस्त्वं ममाचक्ष्व पितामह ॥ १२

इति श्रीमहाभारते शान्तिपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## ३४

वैशंपायन उवाच ।
युधिष्ठिरस्य तद्वाक्यं श्रुत्वा द्वैपायनस्तदा ।
समीक्ष्य निपुणं बुद्ध्या ऋषिः प्रोवाच पाण्डवम् ॥ १
मा विषादं कृथा राजन्क्षत्रधर्ममनुस्मर ।
स्वधर्मेण हता ह्येते क्षत्रियाः क्षत्रियर्षभ ॥ २
काङ्क्षमाणाः श्रियं कृत्स्नां पृथिव्यां च महद्यशः ।
कृतान्तविधिसंयुक्ताः कालेन निधनं गताः ॥ ३
न त्वं हन्ता न भीमोऽपि नार्जुनो न यमावपि ।

---

G1. 3. 4 M2 सर्वान्

10 B1 om 10 (cf. v 1 9) — a) Da2 द्विजश्रेष्ठ; G1 °श्रेष्ठस् — c) M1. 3 व्यक्त° K3 सोक्षाच्च; V1 सौक्ष्म्याच्च, D1 सौक्ष्म्याश्च; D6 सौम्या च, D7 सौक्ष्माच्च — d) S (except G1 M1) प्राप्स्याम°. T2 G1 निधन (for स्त्रीवधं) D2. 3. 8 स्वर्गं (for वयम्).

11 Cf B 13 57 4 — a) Dn1 यद् (for ते) — b) D7 अनंतर — c) D7 T1 G1. 3. 4 प्रपतिष्यामो — d) K4 इद्, M1. 3 अध°; M2 स्वध (for ह्यध°) B5 M ह; D7 lacuna, T G हि (for च)

12 Cf. B 13. 57 5 — a) K3 B2 Da D4 S त्यजिष्यामस्; D7 तुजिष्यामि (for विमोक्ष्यामस्) K5 शरीरं च त्यजिष्यामि — b) M1 तमसोग्रेण D2. 3. 5. 8 कर्मणा (for सत्तम) — G3 om 12cd. — c) K2. 3. 5 V1 B D (except D1) S (G3 om.) आश्रमाणां (Da °णो) (for °मांश्च). K2. 5 Bo 3–5 Dn1 D2. 3. 5. 8 विशेषं; K4 °शेषात्, M1. 3 °शेषास् (for °शेषांस्) G1 (before corr) विशेषाणां Da त्वां (for त्व) — d) K2–4 D4 समाचक्ष्व, K5 B4 Dn D1 अथा° (for ममा°) B3 Da तपोधन (for पितामह).

Colophon om in K3–5 V1 B Da Dn D2–5. 8 — Sub-parvan Ś1 K1. 2 D1. 7 S (except T1 G3. 4) राजधर्म — *Adhy name* T1 G1. 2. 4 युधिष्ठिरानुताप; M2 प्रायश्चित्तकरण — *Adhy no* (figures, words or both) D7 S 32

34

1 Cf B 13 57. 6 D8 om the ref. The portion from 1b up to 22c in G4 is lost on a missing folio — b) K3 D4 तथा (for तदा). — c) K3 V1 B Da Dn D2–5. 8 निरीक्ष्य; D7 S (G4 missing) परीक्ष्य (for समीक्ष्य) Da निश्चय (for निपुणं) B3 सम्यग् (for बुद्ध्या) — d) K5 मुनि; D4. 7 पुन°; T2 तत°; G1 ऋषिं (for ऋषि°)

2 G4 missing (cf v 1. 1). Before 2, N (except D7. 8) S (except T2 M2, G4 missing) ins व्यास उवाच — a) K5 वृथा (for कृथा). — b) K3 Bo 2. 5 Da M1. 3 अनुस्मरन्. — c) Dn2 कृता; G1 हिता (for हता). K1 पुते; B2 Da से वै (for ह्येते). — d) Da पुरुष° (for क्षत्रिय°)

3 G4 missing (cf v 1 1) — a) K1 Da कांक्ष्यमाणा (Da1 °णा°); D8 G1 काक्षमाणां (G1 °णा) D8 स्वय (for श्रिय). K4 सर्वे; D1 सर्वे (for कृत्स्नां) — b) D2. 3. 5. 8 सहस्रश (for महद्यश°). — c) D7 कृतांते — d) D7 S (G4 missing) मरण (for निधनं)

4 G4 missing (cf v 1. 1) — a) T2 हेतुर् (for हन्ता) K3. 5 V1 B Da Dn D2–8 S (G4 missing)

कालः पर्यायधर्मेण प्राणानादत्त देहिनाम् ॥ ४
न यस्य मातापितरौ नानुग्राह्योऽस्ति कश्चन ।
कर्मसाक्षी प्रजानां यस्तेन कालेन संहृताः ॥ ५
हेतुमात्रमिदं तस्य कालस्य पुरुषर्षभ ।
यद्धन्ति भूतैर्भूतानि तदस्मै रूपमैश्वरम् ॥ ६
कर्ममूर्त्यात्मकं विद्धि साक्षिणं शुभपापयोः ।
सुखदुःखगुणोदर्कं कालं कालफलप्रदम् ॥ ७
तेषामपि महाबाहो कर्माणि परिचिन्तय ।
विनाशहेतुकारित्वे यैस्ते कालवशं गताः ॥ ८
आत्मनश्च विजानीहि नियमव्रतशीलताम् ।
यदा त्वमीदृशं कर्म विधिनाक्रम्य कारितः ॥ ९
त्वष्ट्रेव विहितं यन्त्रं यथा स्थापयितुर्वशे ।
कर्मणा कालयुक्तेन तथेदं भ्राम्यते जगत् ॥ १०
पुरुषस्य हि दृष्टैमासुत्पत्तिमनिमित्ततः ।
यदृच्छया विनाशं च शोकहर्षावनर्थकौ ॥ ११
व्यलीकं चापि यत्त्वत्र चित्तवैतंसिकं तव ।
तदर्थमिष्यते राजन्प्रायश्चित्तं तदाचर ॥ १२
इदं च श्रूयते पार्थ युद्धे देवासुरे पुरा । C. 12. 1164 B. 12. 33. 25 K. 12. 32. 13

---

[ऽ]च, D1 [ऽ]स्ति (for ऽपि) —[b]) K1 पुनर्यमौ (for यमावपि) —[d]) D6 कालान्, Dn2 प्राणाय (for प्राणान्) D4 आत्ति हि (for आदत्त) D6 देहिनो

5 G4 missing (cf. v. l. 1) —[a]) K6 V1 B (except B2) D (except D1 4 7) तस्य (for यस्य) —[b]) V1 B1 Dn D6 हि (for ऽस्ति). —[c]) K2 D4 पृथिव्यां सर्वराजानस्; B2 देवापि हि न जानीयुस् —[d]) S1 स हृत, K1 ते हृता, K3 B1 सहि(B1 °ह)ता, B3 मोहिता (for संहृता)

6 G4 missing (cf. v. l. 1) —[a]) D6 तत्र (for तस्य) —[b]) K2 V1 B (except B2) D (except D1 4 7) विहितं, K4 कर्णस्य (for कालस्य) K2 V1 Bo 1.2-4 Da Dn D2 3 5 6 8 भरत°, K3-5 B2 D1 4 7 S (G4 missing) मनुज° (for पुरुष°) —[c]) D7 T1 G1 3 मुष्णति K4 भूता ये (for भूतानि) —[d]) K6 तादृशं, D4 तत्तस्य, D2 तस्य ते; D3 7 S (G4 missing) त(G3 य)दस्य (for तदस्मै) Da1 D7 परमेश्वर (Da1 °री); Da2 S (G4 missing) परमै(T1 G1-3 °मे)श्वरं (for रूपमैश्वरम्) D4 रूपमस्य तदै*रं

7 G4 missing (cf. v. l. 1). —[a]) D7 मुक्त्वा (for मूर्त्या) K1 कर्ममू(by corr °सू)र्त्यात्मना विद्धि; V1 Bo 1.3-5 Da Dn D1-3 5 6 8 क(D1 ध)र्मसूत्रात्मकं विदि, B3 कर्मप्रत्यात्मक बुद्धि —[b]) Dn1 पुण्य (for शुभ°) —[c]) B2 सुखदुःखैर्महाराज, D6 अथ दुःख-सुखोदर्कं; D7 S (G4 missing) सुखदुःखफलोदर्कं (D7 T G1-3 °र्कं) —[d]) D7 काले; M1 3 काल- (for कालं) D4 काल (for काल) B2 कालपुण्यफलप्रदे, T G2 3 काले काले फलप्रद, G1 काल कालफलप्रद

8 G4 missing (cf. v. l. 1) —[b]) B3 परिचिंतयन्.
—[c]) M3 4 हैतु (for हेतु-) K1.4 G2 °कारित्व, K3 5 6 Bo 2 3 5 Da Dn D2 4-8 T2 G1 M °कानि त्वं, V1 B1 4 D3 T1 G3 °कानित्य (for °कारित्वे) —[d]) D1.8 तै (for ते) D8 गत

9 G4 missing (cf. v. l. 1) —[b]) K6 शीलितां V1 Bo 3-5 D2 3 5 6 8 यतव्रतसुशीलतां, B1 Dn नियत व्रतशीलिता (Dn °शासनं) —[c]) S1 K2 तथा (for यदा) —[d]) B1 G2 कारितं; Da कारिता.

10 G4 missing (cf. v. l. 1) K3 D1 transp 10 and 11 —[a]) S1 त्वष्ट्रैव —[b]) B2 (m as in text) तदा, Dn1 तथा (for यथा) K3 5 V1 B D (except D1) S (G4 missing) चे(Da2 वे)ष्टयितुर् (for स्थाप°). B1 वने (for वशे) —[c]) M2 कर्माणि, Cv कर्मणा (as in text) —[d]) Dn D6 चेष्टते (for भ्राम्यते)

11 G4 missing (cf. v. l. 1) K3 D1 transp 10 and 11 D1 transp 11[ab] and 11[cd] —[a]) D1 यदृच्छया (for पुरुषस्य) K1 [इ]ह; M4 [अ]पि (for हि) S1 दृष्टैवम्, Da1 मे दृष्टाम्; D7 दृष्टैमाम् —[c]) D1 पुरुषस्य (for यदृच्छया)

12 G4 missing (cf. v. l. 1) —[a]) Da व्यलीकस्य Da D7 S (G4 missing) अपि (for चापि) K3 4 D1 तत्; Da1 lacuna (for यद्) K1 2 4 4 Bo 2 5 Dn2 D1. 3 7 S (G4 missing) तत्र, Da1 यत्र (for त्वत्र) —[b]) V1 D2 चित्त (for चित्त) S1 K1.4 D1 चित्तवैर्त्रशि(S1 °श)क (for °वैतसिक) Cn v cite चित्तं and वैतसिक Da M4 नृप; M1 3 सु तद्; M2 तत (for तव) —[d]) Da तथैव च; M समाचर (for तदा°)

C 12. 1164
B 12. 33. 25
K 12. 32. 13

असुरा भ्रातरो ज्येष्ठा देवाश्चापि यवीयसः ॥ १३
तेषामपि श्रीनिमित्तं महानासीत्समुच्छ्रयः ।
युद्धं वर्षसहस्राणि द्वात्रिंशदभवत्किल ॥ १४
एकार्णवां महीं कृत्वा रुधिरेण परिप्लुताम् ।
जघ्नुर्दैत्यांस्तदा देवास्त्रिदिवं चैव लेभिरे ॥ १५
तथैव पृथिवीं लब्ध्वा ब्राह्मणा वेदपारगाः ।
संश्रिता दानवानां वै साह्यार्थे दर्पमोहिताः ॥ १६
शालावृका इति ख्यातास्त्रिषु लोकेषु भारत ।
अष्टाशीतिसहस्राणि ते चापि विबुधैर्हताः ॥ १७
धर्मव्युच्छित्तिमिच्छन्तो येऽधर्मस्य प्रवर्तकाः ।
हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोल्बणाः ॥ १८
एकं हत्वा यदि कुले शिष्टानां स्यादनामयम् ।
कुलं हत्वाथ राष्ट्रं वा न तद्वृत्तोपघातकम् ॥ १९
अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप ।
धर्मश्चाधर्मरूपोऽस्ति तच्च ज्ञेयं विपश्चिता ॥ २०
तस्मात्संस्तम्भयात्मानं श्रुतवानसि पाण्डव ।
देवैः पूर्वगतं मार्गमनुयातोऽसि भारत ॥ २१
न हीदृशा गमिष्यन्ति नरकं पाण्डवर्षभ ।

---

13 G4 missing (of v l 1) —[a]) K1 इम (for इद) B4 Dn D2 3 5 6 8 तु; D4 हि (for च) D4 K3 राजन् (for पार्थ) —[b]) D5 देवासुर B3 4 तदा (for पुरा) —[c]) D4 भ्रातरा D5 (marg sec m) ज्येष्ठान् —[d]) K4 ह्यवी° (for यवी°). D7 S (G4 missing) यवीयासस्तथा सुरा (M1 3 4 °स सुरास्तथा)

14 G4 missing (of. v l. 1) —[a]) B2 Da तेषां श्रेयो (Da श्रियो) निमित्त हि —[b]) Ś1 महाक्षय°, K1 समुच्छ्रम°, B2 m Da समुद्यम° —[d]) Da द्वाविंशद् (for द्वात्रिंशद्) M1 अभवन्

15 G4 missing (of v l. 1) —[b]) D7 परिप्लुता. —[c]) D1 जुगुर् (for जघ्नुर्) K (except K1) B1. 5 D (except D2) T G1-3 M2 4 तथा (for तदा) Ś1 दैत्यास्; D7 देवांस् —[d]) D1 त्रिदेवि (for °दिवं) K1 चाव; K3 Dn2 D6 T2 चाभि, V1 B Da Dn1 D2 3 5 7 8 T2 G1-3 M2 4 चापि; M1 3 चोप (for चैव)

16 G4 missing (of v l 1). —[a]) Bo 3-5 D2 3 5 8 अथैव (for तथैव) —[c]) Ś1 K1. 5 D1 दानवानासन् (for °वानां वै) K4 D1 स, Bo 3-5 D2 3 5 8 स्म; B2 तु; Da D7 S (G4 missing) च (for वै) —[d]) K1 (by corr) साह्यर्थे, K2-4 Bo 2 3 Dn2 D7 T1 G1-3 साह्यार्थं, V1 B1 Dn1 D6 T2 सह्यार्थं; Da D2 3 5 8 M2 सह्यार्थे; D1 युद्धार्थे, Cn साह्यार्थे (as in text). K4 दर्पमोक्षिता

17 G4 missing (of v l 1) —[a]) Ś1 सालावृक, D7 S (G4 missing) सालावृका (G1 °घ्नता) D4 इव (for इति) —[d]) Da [ऽ]प (for च)

18 G4 missing (of v l 1). —[a]) Ś1 K1-3 V1 D7 धर्मवि (K3 °व्यो) च्छित्तिम्; T2 °वच्छक्तिम्; G1 °व्यतिच्छति (by corr °व्यच्छति) म् (for °व्युच्छित्तिम्) —[b]) Ś1 transp ये and [अ]धर्मस्य —[c]) M1 गतव्यास (for हन्तव्यास्). Ś1 (sup lin as in text) K1 महात्मानो (for दुरा°). —[d]) Ś1 K1 इह (for इव). D7 S (except M1 3, G4 missing) [उ]द्धता (D7 °तौ) (for [उ]ल्बणा)

19 G4 missing (of v l 1) —[a]) K1 B1 D2 3 6 एव (for एकं) Ś1 K1 4 D1 G1 3 कुल (for कुले). —[b]) Da अनामय° (Da2 °न) —[c]) V1 Bo 3-5 D2 3 5 8 राष्ट्रे वा, B2 वा राष्ट्रे K3 5 Dn D6 कुल हत्वा च राष्ट्रे (Dn2 D6 °ष्ट्र) च; B1 Da D7 T G1-3 M कुले (D7 M °ल) वा यदि वा राष्ट्रे (D7 M4 °ष्ट्र; T1 G1 3 °ज्ये; T2 G2 °ज्यं) —[d]) T2 नैतद्, G1 तत्तद् (for न तद्) Ś1 °पातकं (for °घातकम्). K1 न तद्धृत्वोपपातकं, K2 4 D1 न तत्कृत्वोपपा°, M4 न तद्युक्तोपघा°

20 G4 missing (cf v l. 1) —[a]) Ś1 K1. 4 D1 वा, Cv हि (as in text) —[b]) K4 नराधिप° —[c]) B2 च (for ऽस्ति) Da अधर्मो धर्मरूपश्च, D7 S (G4 missing) धर्मरूपो ह्यधर्मश्च —[d]) K3 5 D4 स च ज्ञेयो; M1 3 तद्विज्ञेयं (for तच्च ज्ञेयं). — After 20, K3 D4 read 23-24

21 G4 missing (of v l 1) —[b]) B1 अपि (for असि) D4 पोडव; D7 भारत (for पाण्डव) — Da2 reads 21[cd] twice —[c]) Ś1 K1 4 D1 पूर्वतर, K3 D4 7 T G1-3 पूर्व (T2 °वं) कृतं (for °गतं) —[d]) B1 हि (for ऽसि). B2 पार्थिव, B3 (m as in text) Da D7 T G1-3 M2 पाडव (for भारत)

22 G4 missing for 22[abc] (of. v l. 1) —[a])

भ्रातॄनाश्वासयैतांस्त्वं सुहृदश्च परंतप ॥ २२
यो हि पापसमारम्भे कार्ये तद्भावभावितः ।
कुर्वन्नपि तथैव स्यात्कृत्वा च निरपत्रपः ॥ २३
तस्मिंस्तत्कलुषं सर्वं समाप्तमिति शब्दितम् ।
प्रायश्चित्तं न तस्यास्ति ह्रासो वा पापकर्मणः ॥ २४
त्वं तु शुक्लाभिजातीयः परदोषेण कारितः ।
अनिच्छमानः कर्मेदं कृत्वा च परितप्यसे ॥ २५
अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम् ।
तमाहर महाराज विपाप्मैवं भविष्यसि ॥ २६
मरुद्भिः सह जित्वारीन्मघवान्पाकशासनः ।
एकैकं क्रतुमाहृत्य शतकृत्वः शतक्रतुः ॥ २७
पूतपाप्मा जितस्वर्गो लोकान्प्राप्य सुखोदयान् ।
मरुद्गणवृतः शक्रः शुशुभे भासयन्दिशः ॥ २८
स्वर्गलोके महीयन्तमप्सरोभिः शचीपतिम् ।
ऋषयः पर्युपासन्ते देवाश्च विबुधेश्वरम् ॥ २९
सोऽयं त्वमिह संक्रान्तो विक्रमेण वसुंधराम् ।
निर्जिताश्च महीपाला विक्रमेण त्वयानघ ॥ ३०
तेषां पुराणि राष्ट्राणि गत्वा राजन्सुहृद्वृतः ।
भ्रातॄन्पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय ॥ ३१
बालानपि च गर्भस्थान्सान्त्वानि समुदाचरन् ।

C. 12. 1203
B. 12. 33. 44
K. 12. 32. 32

Da2 गमिष्यत, M4 भविष्यति (for गमि°) — b) B2 Da D2.3.5.8 भरतर्षभ; D7 T1 G1-3 पार्थिवर्षभ; T2 प्रति पार्थिव (for पाण्डवर्षभ) — c) V1 B2 D7 [सु]तांस, D1 [सु]ताश् (for [सु]तास्) Ś1 K1.4 D1 च (for त्व)

23 K3 D4 read 23–24 after 20 — a) K4 पाप (for पाप°) K4 B1 D2.3.5 T2 G1 °समारभ D8 यो पापसममारभ° — b) D3.8 कार्ये (D3 °र्ये)ते भावि भावित°; D6 कार्यते**नावित° — c) M1.3 तथैवा° स्याद् — d) D1 तथा (for कृत्वा) B3 [अ]पि (for च) Da कृत्वापि निरुपद्रव

24 For sequence in K3 D4, cf. v l 23 — a) B2 स (for तत्) K1 करुष, D7 T1 G1.3.4 किल्बिष, M4 सकल (for कलुषं) B2.3 (m as in text) Da धर्मं, D7 S (except T2 G2) कर्म (for सर्वं) — b) D7 T1 G1.3.4 समस्तम् (for समाप्तम्) D7 चोदित (for शब्दितम्) — c) D6 नरस्य (for न तस्य) — d) K3 ह्रासो; T2 श्रेयो, M2.4 प्रासो (for ह्रासो) M1.3 प्रहासोचापकर्मण (sic)

25 a) K1 कृत्व, Bo 5 त्व स्व (for त्व तु) — b) K3.5 D4 कर्शित, Cv कारित (as in text) — c) D7 अनिच्छमान — d) K1 परितप्यसि, K5 D5 °तप्यते, D7 T1 G3 °तप्स्यसे

26 a) K3.5 D4 महाप्राज्ञ (for °यज्ञ) — b) M2 प्रायश्चित्त K5 Bo 2-4 Da S (except M1.3) उदाहृत° — c) K1 उपाहर; G3 तमाहरं — d) K1 Da वि पाप्मैव Da भविष्यति, D7 व्यथ

27 a) K4 हत्वारीन्, G1 जित्वारिं (for जित्वारीन्). — b) Ś1 D1 मघवा; K1.4.5 V1 B D (except D4.7) T2 भगवान् (for मघवान्) D4 om from पाक up to लोकान् (in 28b) — c) D7 ऐश्वर्यं; G3 आहृत्य (for आहृत्य) — d) V1 शत कृत्वा; Dn2 शत कृत्वा (for °कृत्व°) M2 सहस्रश (for शतक्रतु)

28 D4 om up to लोकान् (cf v l. 27) — a) K3-5 V1 B D (D4 om.) T G धूतपाप्मा. D1 जित (for जित) — b) Da D5 प्राप (for प्राप्य) — c) K3.5 Dn D6 मरुद्गणैर् (for °द्गण°) — d) G1-3 शोभयन् (for भासयन्)

29 a) K3.5 V1 B (except Bo 1) Da Dn2 D8 स्वर्गे (for स्वर्ग) D1 महेयतम्, M1.3 महीयानम्, Cn °यन्तम् (as in text) — b) D1 अप्सरोभि° M1.3 शतक्रतु (for शचीपतिम्) — c) V1 Da2 D2.3.5.8 G1 पर्युपासत — d) B2 Da विबुधाधिप, D8 विबुधैश्वर

30 a) All MSS (except Ś1 K1.2.4 D1) से(G1 सो)य त्वामनुसप्राप्त (D7 °प्य) — b) All MSS (except Ś1 K1.2.4 D1) वसुधरा — c) D4 विनिर्जिता (for निर्जिताश्च) Dn1 महीपाल — d) K5 G2 विक्रमेन B2 Da विभो; M2 नृप (for [अ]नघ)

31 b) D7 T1 G1.3.4 दत्वा (for गत्वा) B2 Da सुहृत्तमान्, G2 सुहृद्वृत — c) Da2 om. पौत्रांश्च K1.2.4 D1 पितॄन्पुत्राश्च (D1 °त्राश्च) भृत्याश्च — d) B2 स्थाने; T2 राष्ट्रे (for राज्ये)

32 b) K1 सान्त्वानि; K 3.5 Dn1 D4 सान्त्वेन;

C. 12. 1203
B. 12. 32. 44
K. 12. 32. 32

रञ्जयन्प्रकृतीः सर्वाः परिपाहि वसुंधराम् ॥ ३२
कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय ।
कामाशयो हि स्त्रीवर्गः शोकमेवं प्रहास्यति ॥ ३३
एवमाश्वासनं कृत्वा सर्वराष्ट्रेषु भारत ।
यजस्व वाजिमेधेन यथेन्द्रो विजयी पुरा ॥ ३४
अशोच्यास्ते महात्मानः क्षत्रियाः क्षत्रियर्षभ ।
स्वकर्मभिर्गता नाशं कृतान्तबलमोहिताः ॥ ३५
अवाप्तः क्षत्रधर्मस्ते राज्यं प्राप्तमकल्मषम् ।
चरस्व धर्मं कौन्तेय श्रेयान्यः प्रेत्य भाविकः ॥ ३६

इति श्रीमहाभारते शान्तिपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## ३५

युधिष्ठिर उवाच ।
कानि कृत्वेह कर्माणि प्रायश्चित्तीयते नरः ।
किं कृत्वा चैव मुच्येत तन्मे ब्रूहि पितामह ॥ १

व्यास उवाच ।
अकुर्वन्विहितं कर्म प्रतिषिद्धानि चाचरन् ।
प्रायश्चित्तीयते ह्येवं नरो मिथ्या च वर्तयन् ॥ २

---

K4 V1 B1. 3 Dn2 D2 3 5 6 8 सततिं; D1 सत्वानि, D7 स्थानानि (for सान्त्वानि) K4 B0 4 5 D1 समुपाचरन्; V1 °पाचर; D4 °ष्टाचर B3 अपालयन्नराधिप; Da पालयस्व नराधिप° —d) K5 D4 अभिशाधि; Da पर्येही (Da3 °हि)मां (for परिपाहि).

33 b) D6 [अ]भिर्षिचय. K3 तेषां कन्याभिषेचय. —c) D8 [ऽ]पि (for हि) D7 कामो यो हि स्त्रियर्गः. —d) D7 एक (for एवं). K3 V1 Dn T2 प्रहास्यसि; D7 प्रशास्यति

34 a) T2 एवं कृत्वा समाधानं. —d) G1. 2 विजये D7 पुन° (for पुरा).

35 a) B3 Da D7 S (except M4) न शोच्यास्ते D7 M4 महाराज (for °त्मान°). —b) D5 G2 क्षत्रियर्षभा; M1. 3 भरतर्षभ (for क्षत्रिय°) — D7 om. 35cd —c) T2 कृतान्तका (for गता नाशं). —d) K3. 5 D4 कृतांतवशमोहिता°; D8 °बलवाहिता°

36 a) G1. 3 अवाप्त D7 अवाप्तं क्षत्रधर्मं ते —b) B3 Da D4. 7 S transp राज्यं and प्राप्त All MSS (except Ś1 K1 2 4 D1) अकटक (for अकल्मषम्) —c) K5 Dn रक्षस्व (for चरस्व) Da3 धर्मे; D1 2 धर्मे; D7 कर्म (for धर्मं). —d) K1 श्रेयोन्य°; B3 D8 श्रेयाश्च, B3 m S श्रेष्ठो य° (for श्रेयान्य°) Ś1 प्रीतिभाविकः; K1 G3 प्रत्यभाविक (G3 °क°); K5 V1 B Da Dn D2 3 5. 6 8 प्रेत्य भारत; G3 M3 प्रेत्यभाविकं (M3 °त°) (for प्रेत्य भाविक°) D7 श्रेय° प्रेत्यस्वभाविक°.

Colophon. — *Sub-parvan* All MSS (except D8 G3 4) राजधर्म. — *Adhy. name* V1 B0-3. 5 Dn D6 प्रायश्चित्तीये (Dn3 °श्चित्ते), G4 व्यासवचन°, M3 देवासुरयुद्धनिदर्शनं — *Adhy no* (figures, words or both) B1 3 4 Da1 Dn D3 7 S 33, D8 32. — *Śloka no* Dn1 D3 48

## 35

1 D3 om. the ref —a) B3 Da D7 S कानि कर्माणि कृत्वेह. —b) Da प्रायश्चित्तायते. —c) D3. 3 5 8 चेह (for चैव) K4 देहमुच्येत; Dn मुच्यते तत्र; D7 वै विमुच्येत; G4 चैति च स्वर्गं (for चैव मुच्येत) —d) B3 Da तपोधन (Da °न) (for पितामह).

2 Cf Manu. 11 44 D3 M4 om the ref. —b) T2 प्रतिसिद्धानि B0 या चरन्; G1 चाचर. —c) Da प्रायश्चित्तायते. —d) K1 च वर्जयन्; K3 5 D1 विवर्तयन्, K4 V1 B Da Dn D2 3. 5 8 Cn [अ]नुवर्तयन्; D6 [अ]भिवर्त° (for च वर्त°).

3 a) Ś1 K1 2 4 [अ]भ्युदये; Ca n v °दितो (as in text) —b) G4 भावचारी (for ब्रह्म°) Da भवत्पुन, M4 भवन्त्युत. —c) D7 T2 यथा (for तथा) Ś1 K1. 4 सूर्योभि°;. Ca. n सूर्याभि° (as in text) —d) K3. 4 B1 Dn1 D1. 3. 4-6 8 इयावद(D3 6 °द)त्यपि.

4 a) V1 परिवेत्ता च (hypermetric) D7 T1 G

सूर्येणाभ्युदितो यश्च ब्रह्मचारी भवत्युत ।
तथा सूर्याभिनिर्मुक्तः कुनखी श्यावदन्नपि ॥ ३
परिवित्तिः परिवेत्ता ब्रह्मोज्झो यश्च कुत्सकः ।
दिधिषूपतिस्तथा यः स्यादग्रेदिधिषुरेव च ॥ ४
अवकीर्णी भवेद्यश्च द्विजातिवधकस्तथा ।
अतीर्थे ब्रह्मणस्त्यागी तीर्थे चाप्रतिपादकः ॥ ५
ग्रामयाजी च कौन्तेय राज्ञश्च परिविक्रयी ।
शूद्रस्त्रीवधको यश्च पूर्वः पूर्वस्तु गर्हितः ॥ ६
वृथापशुसमालम्भी वनदाहस्य कारकः ।
अनृतेनोपचर्ता च प्रतिरोद्धा गुरोस्तथा ॥ ७
यश्चाग्नीनपविध्येत तथैव ब्रह्मविक्रयी ।
एतान्येनांसि सर्वाणि व्युत्क्रान्तसमयश्च यः ॥ ८
अकार्याण्यपि वक्ष्यामि यानि तानि निबोध मे ।
लोकवेदविरुद्धानि तान्येकाग्रमनाः शृणु ॥ ९
स्वधर्मस्य परित्यागः परधर्मस्य च क्रिया ।
अयाज्ययाजनं चैव तथाभक्ष्यस्य भक्षणम् ॥ १०
शरणागतसंत्यागो भृत्यस्याभरणं तथा ।
रसानां विक्रयश्चापि तिर्यग्योनिवधस्तथा ॥ ११

C. 12. 1218
B. 12. 34. 11
K. 12. 33. 13

M1-3 परिवेत्ता ( M1 °त्त ) परिवित्ति ( D7 °त्तश्च, hypermetric ) — $^{b}$) K2 4 B Da1 Dn D2 3. 5 6 8 ब्रह्मघ्नो, Da2 D1 ब्रह्म यो ( for ब्रह्मोज्झो ) K3 5 D4 ब्रह्मेज्या( K3 °घा , D4 °भा )याश्च, V1 ब्रह्मघ्नोस्य च ( for ब्रह्मोज्झो यश्च ) B2 दूपक ( for कुत्सक ) K1 ब्रह्मोज्ञेयश्चित्सक (sic), D7 S ब्रह्मे( G3 °ह्म )ज्यायाश्च दूपक — After $4^{ab}$, K3 5 D4 read $6^{cd}$ D1 reads $4^{cd}$ twice — $^{c}$) Hypermetric T1 च ( for य ) Da1 M1-3 om. स्याद् K2 5 B1 3 Dn D2 3 6 8 T2 M4 दिधिपू ( B3 °सू )पपतिर्यः स्याद् ( K5 °तिस्तु यः स्याद् ) Ca v cite दिधीपूपपतिर् — $^{d}$) Da तथा; M1-3 ह्यग्रे ( for अग्रे )

5 D6 om 5 B2 Da transp $5^{ab}$ and $5^{cd}$ — $^{a}$) Da1 अवकीर्णाद् ; Da2 °कीर्णे , D7 °कीर्णस् ; M2 °कीर्णिस् , Cv अवकीर्णी ( as in text ) K3 5 Da D4 7 S तथा ( for भवेद् ) B1 G3 यस्तु ( for यश्च ) — $^{b}$) G1-3 °वधकारक — $^{c}$) K5 अतीर्थब्राह्मणस् K1 4 V1 B Da Dn2 D2 3 5 7 8 T1 G1 3 4 M1. 3 4 ब्राह्मणस् ( V1 D7 G1. 3 4 °ण- ), T2 G2 ब्राह्मणे — $^{d}$) K4 °घातक ( for °पादक )

6 $^{a}$) Ś1 ( *sup lin* as in text ) V1 B D ( except D7 ) Cn ग्रामघाती , Cnp °याजी ( as in text ) — $^{b}$) K5 गजाश्च , B ( except B2 ) Dn D2 3 5 6 8 मांसस्य ( for राज्ञश्च ) D7 T G वा ( for च ) — After $6^{ab}$, Dn reads $8^{ab}$ K3 5 D4 read $6^{cd}$ after $4^{ab}$ G2 om. $6^{c}$–$7^{d}$, G4 om ( hapl ) $6^{c}$–$8^{b}$ — $^{c}$) K5 V1 B Da Dn D2 3 5 6 8 गुरुस्त्री°, D7 T G1 3 M3 4 स्त्रीशूद्र° ( for शूद्रस्त्री ) K5 D7 तु ( for च ) — $^{d}$) K2 3 V1 T2 पूर्व , K5 पूर्वं , Dn2 यश्च , D4 पूर्वा ( for पूर्व ) D2 3. 5 8 पूर्वश्च , D4 °वैसु , G3 °वैस्य

7 G2 4 om 7 ( cf v l 6 ) — $^{a}$) D1 स्यथा ; D6 यथा ( for वृथा- ) Ś1 K1 M -पशुसमारभी , Da °जभी ( for पशुसमालम्भी ) — $^{b}$) K2 5 V1 B Da Dn D2-6 8 गृहदाहस्य ( Da1 D8 °हश्च ) ( for वन° ) D3 8 दारक , D4 कारण ( for कारक ) — $7^{cd}$ = 12 36 $20^{ab}$ — $^{c}$) D6 अनृते च , T2 अन्यायेन ( for अनृतेन ) K1 V1 B0 2. 4 5 D3-6 8 [उ]पचर्ता , K2 4 M2 °कर्ता , K3 5 B3 Dn D1 2 °वर्ती , B1 °हर्ता ; D7 °वीता , T G1 3 °वक्ता ( for °चर्ता ) — $^{d}$) K3 D7 T2 G1 3 प्रतिपेद्धा , M1 3 °रध्वो , M4 °रध्वा ( for °रोद्धा ) D2 3 5 8 च य ( for तथा )

8 G4 om $8^{ab}$ ( cf v l 6 ) D8 om ( hapl ) 8 Dn reads $8^{ab}$ after $6^{ab}$ — $^{a}$) Da त्रीनग्नीन् ( for यश्चाग्नीन् ) V1 B1 Da Dn2 D6 परिमुच्येत , D1 पतिरेयश्च ( sic ) ( for अपविध्येत ) K5 यस्या मासस्य विध्येत — $^{b}$) Da ब्रह्मविक्रे( Da2 °क्रि )या ; Cnp राजविक्रयी — $^{c}$) K1 T2 एतान्यन्यानि सर्वाणि

9 $^{a}$) K3 5 V1 B Da Dn D2-6 8 S तु , D1 7 च ( for [अ]पि ) — $^{b}$) Dn2 तानि यानि ( by transp ), M2 तानि तानि — $^{c}$) T2 G2 M1 3 लोके ( for लोक ) — After $9^{c}$, D1 repeats $9^{b}$ and om $9^{d}$ V1 reads $9^{d}$–$12^{c}$ on marg

10 V1 reads 10 on marg — $^{b}$) B0 च क्रिया , G3 चाश्रय , M4 च क्रिय ( for च क्रिया ) — D2 om $10^{c}$–$11^{b}$ — $^{c}$) Da1 अयाज्ययाचन , D1. 4 अयाच्य( D1 °जि )याजन D4 चेव , D7 तस्य ( for चैव ) — $^{d}$) K5 भक्षक D7 T G अभक्ष्यस्य च भक्षणं

11 V1 reads 11 on marg D2 om $11^{ab}$ ( cf v l. 10 ) D8 repeats $11^{a}$–$13^{b}$ after $13^{ab}$ — $^{c}$) K4 V1 D2 3 5 8 T2 चैव ( for चापि )

C. 12. 1219
B. 12. 34. 12
K. 12. 33. 14

आधानादीनि कर्माणि शक्तिमान्न करोति यः ।
अप्रयच्छंश्च सर्वाणि नित्यं देयानि भारत ॥ १२
दक्षिणानामदानं च ब्राह्मणस्याभिमर्शनम् ।
सर्वाण्येतान्यकार्याणि प्राहुर्धर्मविदो जनाः ॥ १३
पित्रा विभजते पुत्रो यश्च स्याद्गुरुतल्पगः ।
अप्रजायन्नधर्मेण भवत्याधर्मिको जनः ॥ १४
उक्तान्येतानि कर्माणि विस्तरेणेतरेण च ।
यानि कुर्वन्नकुर्वंश्च प्रायश्चित्तीयते जनः ॥ १५
एतान्येव तु कर्माणि क्रियमाणानि मानवान् ।
येषु येषु निमित्तेषु न लिम्पन्त्यथ तच्छृणु ॥ १६
प्रगृह्य शस्त्रमायान्तमपि वेदान्तगं रणे ।
जिघांसन्तं निहत्याजौ न तेन ब्रह्महा भवेत् ॥ १७
अपि चाप्यत्र कौन्तेय मन्त्रो वेदेषु पठ्यते ।
वेदप्रमाणविहितं तं धर्मं प्रब्रवीमि ते ॥ १८
अपेतं ब्राह्मणं वृत्ताद्यो हन्यादाततायिनम् ।
न तेन ब्रह्महा स स्यान्मन्युस्तं मन्युमृच्छति ॥ १९

---

12 For sequence in D8, cf. v. l. 11. V1 reads 12[abe] on marg. — [a]) B1 धर्मादीनि च; Da1 आधायादीनि, D8 अधाना° (for आधाना°). — [b]) D7 च (for य). — [c]) T2 अपप्रदश्च सर्वाणि. — [d]) K1-3 6 V1 B Da Dn D2 3 5-8 T G M1 3 4 नित्य (for नित्य).

13 For sequence in D8, cf. v. l. 11. — [a]) Ś1 K2 4 अदानत्व (for अदान च). K1 दक्षिणानामदान (sup. lin. °दांत)त्वं. — [b]) K1 नदन, K3 5 D4 कर्शन; V1 Bo 1 3-5 Dn2 D2 3 5 6 8 म(D8 ध)र्षण, Dn1 मर्षन; D1 वर्पण (for -मर्शनम्). B2 ब्राह्मणं वापि मर्षण, Da ब्रह्मा(Da2 °ह्म)णस्याभिमर्पण, M1 ब्राह्मणस्याभिमर्शन. — [c]) Bo D1 M1 कार्याणि, B1 D7 T2 कर्माणि (for [अ]कार्याणि). — [d]) D7 T G तथा (for जना).

14 [a]) K3 5 Bo 4 6 Dn D2 3 5 6 8 विवदते, B1 विपदते, Ca विभजते (as in text). K2 B2 पुत्रान् (for पुत्रो). Ś1 K1 4 V1 Da D1 4 पिता विभजते पुत्रान्. — [b]) K4 D4 तु (for च). D2 om. from ल्पग up to न्येव तु (in 16[a]). — [c]) D7 G अप्रजोयन्, M1 °योजश्, M2 °ज्ञायन्, M3 °जो यश्, M4 °जायश् (for °जायन्). Ca cites अप्रज्ञायन्. K5 V1 B D (except D1 4, D2 om.) T G नरव्याघ्र, M1 3 4 च धर्मेण (for अधर्मेण). K2 अप्रजा येन धर्मेण. — [d]) Ś1 K1 (before corr.) 3 Dn2 D7 8 G1 3 M3 4 [आ]धार्मिको, K1 (by corr.) 2 4 5 V1 B Da Dn1 D3 5 6 T2 [अ]धा° (for [आ]ध°). K1 D1 जना, K3 5 V1 B1. 2 5 Da Dn D3-8 S नर° (for जन).

15 D2 om. 15 (cf. v. l. 14). — [b]) Da तु (for च). — [c]) D1 यानि कुर्वंति कुर्वंश्च, G3 यानि कुर्वंश्च पापानि. — [d]) Da प्रायश्चित्तायते नरा.

16 D2 om. up to °न्येव तु (cf. v. l. 14). — [a]) Da1 एतान्मेवं; D7 इतान्येव; M4 एतान्यपि (for °न्येव). D1 M4 च (for तु). Da कार्याणि (for कर्माणि). — [b]) K4 5 V1 Bo 2-5 Da Dn D3 4 5 6 8 मानवा, B1 D1 °व°, D7 S (except M1 2) °वै. — [d]) K2 4 Bo 2-6 Da D2 3 5 7 8 T2 G2 M2 4 लिप्यति, K3 6 V1 B1 Dn D6 लिप्यते; D1 T1 G3 लिपंति; G1 लुपंति (for लिम्पन्ति). K1 3 5 V1 B (except B2) D (except Da D4) S (except M1 3 4) तान् (D1 G1 तां) (for तच्).

17 = (var.) Vasiṣṭha Smṛti 3. 20. — [a]) K1 शत्रुम् (for शस्त्रम्). — [b]) D3 5 अति (for अपि). K3. 5 Bo D4 G3 अपि वेदात(K5 °ग)पारग (G3 °ग°). — [c]) V1 B D (except D1 4) T G M4 जिघांसीयान् (T2 °याद्) (for निहत्याजौ). — [d]) T2 इति न (for न तेन).

18 [a]) K2 Dn1 इति, T2 अथ (for अपि). K6 T2 M2 वा (for च). B4 (marg.) Dn2 D2 3. 5 6 8 [अ]न्यत्र (for [अ]प्यत्र). — [b]) M1 2 मत्रे. V1 सेंद्रे देवे च पठ्यते. — [c]) Bo M1 3 वेदप्रमाण (for °प्रमाण). — [d]) V1 B Da Dn D2 3 5 6 8 धर्मं च, D7 धर्मं तं (by transp.), T1 G2-4 धर्मं हि. G1 हि ब्रवीमि (for प्रब्र°). K1 [अ]ह (for ते).

19 Cf. 12. 15. 55. Manu 8. 350-51, Vasiṣṭha Smṛti 3. 21, Bodhāyana Smṛti 1. 10. 14. — [a]) Da1 अपेता. Ś1 K1 वित्ताद्, Da वृत्ता, D4 वृत्तान्; D7 वृद्ध (for वृत्ताद्). D1 अनेत ब्रह्मण वृत्ताद् (sic). — [b]) D7 स (for यो). K3 आततायिक, Da1 °यिनां. — [c]) K4 ब्रह्मणा. — [d]) K1 D7 मृत्युस्, M1 3 मनुस् (for मन्युस्). K2-4 V1 B D (except D4) T1 G3 4 M4 तन्- (for तं). Ś1 K1 3 5 Bo 2-5 Da D2. 3 5 6 मन्युमर्छे(B2 °र्चं)ति.

20 [a]) D1 प्राज्ञ° (for प्राणा°). M4 यथा (for

प्राणात्यये तथाज्ञानादाचरन्मदिरामपि ।
अचोदितो धर्मपरः पुनः संस्कारमर्हति ॥ २०
एतत्ते सर्वमाख्यातं कौन्तेयाभक्ष्यभक्षणम् ।
प्रायश्चित्तविधानेन सर्वमेतेन शुध्यति ॥ २१
गुरुतल्पं हि गुर्वर्थे न दूषयति मानवम् ।
उद्दालकः श्वेतकेतुं जनयामास शिष्यतः ॥ २२
स्तेयं कुर्वंस्तु गुर्वर्थमापत्सु न निबध्यते ।
बहुशः कामकारेण न चेद्यः संप्रवर्तते ॥ २३
अन्यत्र ब्राह्मणस्वेभ्य आददानो न दुष्यति ।
स्वयमप्राशिता यश्च न स पापेन लिप्यते ॥ २४

प्राणत्राणेऽनृतं वाच्यमात्मनो वा परस्य वा ।
गुर्वर्थे स्त्रीषु चैव स्याद्विवाहकरणेषु च ॥ २५
नावर्तते व्रतं स्वप्ने शुक्रमोक्षे कथंचन ।
आज्यहोमः समिद्धेऽग्नौ प्रायश्चित्तं विधीयते ॥ २६
पारिवित्र्यं च पतिते नास्ति प्रव्रजिते तथा ।
भिक्षिते पारदार्यं च न तद्धर्मस्य दूषकम् ॥ २७
वृथापशुसमालम्भं नैव कुर्यान्न कारयेत् ।
अनुग्रहः पशूनां हि संस्कारो विधिचोदितः ॥ २८
अनर्हे ब्राह्मणे दत्तमज्ञानात्तन्न दूषकम् ।
सकारणं तथा तीर्थेऽतीर्थे वा प्रतिपादनम् ॥ २९

C. 12. 1236
B. 12. 34. 29
K. 12. 33. 31

---

तथा) —[b]) $K_{1}$ अचरन्, $B_{2}$ $D_{a}$ आचरेन्, $D_{7}$ $T_{1}$ G आचम्य, $T_{2}$ आचामन्, $M_{2}$ आचार (for आचरन्) $K_{3}$ $D_{4}$ गर्हितान्यपि, $B_{2}$ $D_{a}$ मदिरा यदि (for °रामपि) —[c]) K (except $K_{1}$) $B_{0\,1\,3-5}$ $D_{n}$ $D_{3\,5\,6}$ आदेशितो, $V_{1}$ अचोदितां, $B_{2}$ आचोदितो, $D_{8}$ आदर्शितो (for अचोदितो) $K_{3-5}$ $V_{1}$ B $D_{n}$ $D_{1-3\,5\,6\,8}$ $T_{2}$ धर्मपरं, $D_{7}$ °वर $D_{a}$ स चोदितो ब्रह्मपर.

21 [b]) $V_{1}$ [अ]भक्षभक्षण; $D_{4}$ [अ]भक्षलक्षणे. —[c]) $K_{4}$ प्रायश्चित्त $D_{7}$ प्रायश्चित्त दवानेन —[d]) $G_{2}$ सर्वं मेधेन $K_{1}$ (before corr) $B_{2}$ $M_{1}$ शुध्यते, $D_{7}$ सिध्यति

22 [a]) $D_{7}$ गुरुतल्पो, $G_{4}$ °तल्पे K (except $K_{1}$) गुर्वर्थं —[b]) $D_{1}$ दूषयेति

23 [a]) $D_{2,3}$ कुर्यान्, $D_{8}$ गुर्वन्न् (for कुर्वंस्) $K_{6}$ $V_{1}$ $B_{2}$ $D_{n1}$ $D_{3\,5\,7\,8}$ च; T G हि (for तु) $D_{2}$ $G_{1}$ गुर्वर्थे —[b]) $K_{3}$ $D_{n1}$ $D_{6}$ निपिध्यते, $V_{1}$ विबध्यते, $B_{0}$ विध्यते (sic), $D_{a}$ निर्बध्यते, $D_{4}$ निबु°, $D_{8}$ कुव° (for निब°) $K_{6}$ आपत्सु च न विद्यते, $D_{7}$ S आ ($G_{1}$ मा)पत्स्वपि न पातकी (M °क) —[c]) $K_{4}$ $D_{7}$ T $G_{1,4}$ $M_{1\,3}$ कामचारेण

24 [a]) $M_{1,3}$ नान्यत्र $D_{a}$ ब्राह्मणेभ्यश्च, $D_{4}$ ब्रह्मणस्वेभ्य; $D_{7}$ ब्राह्मणस्तेभ्य, $D_{8}$ °श्चेत्र (for °स्वेभ्य) —[b]) $M_{2\,4}$ स्वाददानो $K_{2}$ $G_{3}$ तुष्यति ($G_{3}$ °ते), $D_{2}$ शुष्यति; $D_{4\,7}$ $G_{4}$ $M_{1}$ दूष्यते ($D_{4}$ °ति), $T_{1}$ $M_{2\,3}$ दुष्यते —[c]) $K_{4}$ आप्राशिता, T G प्रकाशिता (for अप्रा°) $M_{2}$ याश्च. —[d]) $D_{5}$ transp न and स

25 [a]) $B_{2}$ प्राणत्यागेनृतेदोष; $D_{a}$ °त्राणेनृतेदोषे —[b]) $K_{3}$ $D_{n1}$ $D_{3\,5\,8}$ च (for the second वा) —[c]) $D_{n1}$ गुर्वर्थे $M_{1}$ चैवास्याद् —[d]) $D_{a1}$ -करणेषु वा, $D_{1}$ °णे तथा, $D_{7}$ T G °णे नृप (for °णेषु च)

26 [a]) $K_{2\,4\,5}$ $D_{2\,4}$ न लुप्यते, $D_{a1}$ नाव्रतेत; $D_{a2}$ $D_{1}$ नावर्तेत (for नावर्तते) —[b]) $D_{7}$ $T_{1}$ G $M_{1,3\,4}$ शुक्लमोक्षे, $T_{2}$ शुक्रमोक्ष —[c]) $B_{0}$ आज्यहोम $Ś_{1}$ $K_{1}$ समृद्धे, $D_{1,7}$ समिद्धो $D_{a}$ आज्यहोममसिद्धाग्नौ ($D_{a1}$ °मिद्धासौ)

27 [a]) $K_{1\,5}$ $G_{4}$ परिवित्त, $K_{4}$ $D_{2\,3\,8}$ पारिविद्यं; $B_{1}$ पारिवित्तं, $B_{4}$ damaged; $D_{a}$ °वित्तिस्; $T_{2}$ पारदार्यं; $G_{2}$ परिभूत्यं $K_{2\,4\,5}$ $V_{1}$ B D (except $D_{1}$) S तु, $K_{3}$ नु (for च) —[b]) $D_{a2}$ प्रव्रजितं; $D_{1}$ °जते $D_{7}$ [ऽ]य वा, T G [ऽ]पि वा (for तथा) —[c]) $Ś_{1}$ $K_{1}$ शिक्षिते, $K_{5}$ $D_{4}$ $T_{1}$ G भिक्षुके ($G_{1}$ °को); $D_{a1}$ भक्षिते $K_{1}$ पारदार्यं, $D_{a}$ $D_{7}$ $T_{1}$ G पा($D_{a1}$ $G_{1}$ प)रदार्ये, $D_{6}$ परदार्यं —[d]) $K_{2\,3\,5}$ $V_{1}$ B $D_{n}$ $D_{3\,5\,6\,8}$ transp न and तद्धर्मस्य $T_{2}$ तु (for तद्) $Ś_{1}$ $K_{1\,4,5}$ $B_{5}$ $D_{1}$ दूषण $D_{a}$ तद्धर्मस्य न दूषक (hypermetric)

28 [a]) $Ś_{1}$ $K_{1}$ $B_{3}$ M °समारंभ, $D_{4}$ -समालभो —[b]) $V_{1}$ कार्यं (for कुर्यान्). $K_{1}$ न कुर्यान्न च कारयेत् —[c]) $Ś_{1}$ $K_{1\,4}$ $D_{1}$ च (for हि) —[d]) $K_{4}$ संस्कार्यो, $D_{n2}$ $D_{3\,8}$ संस्कारे $K_{5}$ $D_{n1}$ $D_{4\,7}$ विधिनो($D_{7}$ °पा)दित

29 [a]) $M_{2}$ ब्रह्मणो $M_{2\,4}$ दानम् (for दत्तम्) —[b]) $D_{7}$ अज्ञानार्थं (for °नात्तन्) $K_{4}$ $D_{6}$ तु (for तन्). $D_{4}$ om न $Ś_{1}$ K (except $K_{3}$) $D_{1}$ दूषणं. —[c]) $K_{1}$ $D_{2\,7}$ संस्कारण; $K_{2\,3}$ $V_{1}$ B $D_{a}$ $D_{n}$ $D_{1,3,}$

C 12. 1237
B. 12. 34. 30
K. 12. 33. 32

स्त्रियस्तथापचारिण्यो निष्कृतिः स्याददूषिका ।
अपि सा पूयते तेन न तु भर्ता प्रदुष्यते ॥ ३०
तत्त्वं ज्ञात्वा तु सोमस्य विक्रयः स्याददूषकः ।
असमर्थस्य भृत्यस्य विसर्गः स्याददोषवान् ।
वनदाहो गवामर्थे क्रियमाणो न दूषकः ॥ ३१
उक्तान्येतानि कर्माणि यानि कुर्वन्न दुष्यति ।
प्रायश्चित्तानि वक्ष्यामि विस्तरेणैव भारत ॥ ३२

इति श्रीमहाभारते शान्तिपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

# ३६

व्यास उवाच ।
तपसा कर्मभिश्चैव प्रदानेन च भारत ।
पुनाति पापं पुरुषः पूतश्चेन्न प्रवर्तते ॥ १
एककालं तु भुञ्जानश्चरन्भैक्षं स्वकर्मकृत् ।
कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोत्थितः ॥ २
अनसूयुरधःशायी कर्म लोके प्रकाशयन् ।

---

5 8 सत्काराणा, K5 संकराणां, D4 निकारण, D8 संस्काराणा — D7 om (hapl) 29d–31e — d) All MSS. (except Ś1 K1, D7 om) नित्य (for ऽतीर्थे) T1 च (for वा) B1 3–5 Dn2 D2 3 5 6 8 T2 G M1 3 चाप्रतिपादन (Dn2 D5 °कं) K4 प्रत्यपादन.

30 D7 om 30 (cf v l 29) — a) K5 स्त्रिय; V1 B D (except D1 2 4, D7 om) G2 M1–3 स्त्रियस् K1 3. 5 V1 B D (D7 om) G3 M Ca [अ]प चारिण्या, T G1 3 4 [अ]भिचारिण्या (T1 G3 °ण्यो) K2 4 स्त्रियश्च परिचारिण्यो — b) Ś1 K1 D1 T2 G4 अदूषिता; K2 °पक, K4 G1 3 °पका; D4 °पिक — D4 om (hapl) 30c–31b — c) Bo स (for सा) Da2 पूज्यते, T1 G3 4 दूयते, T2 लज्यते (for पूयते) — d) K4 D2 3 5 च (for तु) K4 5 B (except B3, B4 damaged) D (D1 7 om) T2 M3 प्रदुष्यति

31 D4 om. 31ab (cf v l 30), D7 om 31abcde (of v l. 29) — a) Da1 सोमश्च T2 तत्त्वज्ञोप्यनुसो मस्य; M1 3 न स्वज्ञात्वा च सोमस्य — b) T2 G1 विक्रयी, M1 3 4 विक्रिय K4 V1 B Da Dn D2 3 5 8 S अदोषवान्, D6 अदूषिका (for अदूषक°) — V1 reads 31cd on marg — d) K2 अदूषक ; K3 5 D4 अदोषभाक् (for °वान्) — f) K1 2 क्रियमानो, Da1 ह्रियमाणो; D7 क्रियमाणे D1 दूषित, D6 दोषक°; G2 दूपक; M3 दुष्यति

32 b) B1 D7 S दूष्यते, B2 लिप्यते — d) T G1 3 4 च (for [ए]व) K1 [ए]व पार्थिव; B3 Da विदां पते (for [ए]व भारत) — After 32, D7 S ins

47* यानि कृत्वा नर पूतो भविष्यति नराधिप ।
[G3 पुन° (for नर°) G1 नराधिप ]

Colophon —*Sub-parvan* All MSS. (except V1 D8 G3 4) राजधर्म —*Adhy name* V1 Bo 1 4 5 Dn1 प्रायश्चित्तीयं; D7 T1 G1 2 4 प्रायश्चित्तविधान; M3 प्रायश्चित्तसंक्षेपकथन —*Adhy no* (figures, words or both) K5 B1 2 4 Da1 Dn1 D1 2 7 S 34, D8 33 —*Śloka no* Dn1 32, D8 34.

## 36

1 D8 om the ref — a) Da तपस्या, Ca °सा (as in text) D2 3 5 8 कर्मणा, Ca कर्मभिश्[च] (as in text) — b) D6 प्रधानेन (for प्रदा°) Ś1 K1 तु (for च) — c) Dn3 (marg) पुरुष, D4 पुरुषा — d) K B3 5 6 D (except Da D1 7) पुनश्[च] (for पूतश्[च]) M1 3 न (for न) B (except Bo 2) D2 3 5 6 8 प्रवर्तयेत् T2 पूतो न प्रतिवर्तते

2 a) K5 एककाले K3 5 B (except B2) D2–5 च, K4 हि (for तु) K3 4 V1 B (except B2) D (except Da D4 7) भुञ्जीत (for भुञ्जानश्[च]) — b) N (except Ś1 D4 6 7) भैक्ष्य — c) Da2 खड्गागी, D1 G2 खट्वांगे (G2 °गो); D4 पट्वागी, Cv as in text — d) K1 नदोत्थित°; K5 वने स्थित ; D7 चलोर्थित. (sic) (for सदोत्थित)

पूर्णैर्द्वादशभिर्वर्षैर्ब्रह्महा विप्रमुच्यते ॥ ३
षड्भिर्वर्षैः कृच्छ्रभोजी ब्रह्महा पूयते नरः ।
मासे मासे समश्नंस्तु त्रिभिर्वर्षैः प्रमुच्यते ॥ ४
संवत्सरेण मासाशी पूयते नात्र संशयः ।
तथैवोपरमन्राजन्स्वल्पेनापि प्रमुच्यते ॥ ५
क्रतुना चाश्वमेधेन पूयते नात्र संशयः ।
ये चास्यावभृथे स्नान्ति केचिदेवंविधा नराः ॥ ६
ते सर्वे पूतपाप्मानो भवन्तीति परा श्रुतिः ।
ब्राह्मणार्थे हतो युद्धे मुच्यते ब्रह्महत्यया ॥ ७
गवां शतसहस्रं तु पात्रेभ्यः प्रतिपादयन् ।
ब्रह्महा विप्रमुच्येत सर्वपापेभ्य एव च ॥ ८
कपिलानां सहस्राणि यो दद्यात्पञ्चविंशतिम् ।
दोग्ध्रीणां स च पापेभ्यः सर्वेभ्यो विप्रमुच्यते ॥ ९
गोसहस्रं सवत्सानां दोग्ध्रीणां प्राणसंशये ।

C. 12. 1233
B. 12. 35. 13
K 12. 34. 13

---

3 [a]) Ś1 अनसूय (for °सूयुर्) K1 D4 अनसूयेम (D4 °र्)धशायी, D8 °सूयधरशायी — [b]) G4 लोक- (for लोके) Ś1 प्रशमयन् (for प्रकाश°) — [c]) D4 पूर्णे Da पूर्णे तु द्वादशे वर्षे, M2 पूर्णे द्वादशमे वर्षे Ca द्वादशभिर्वर्षै (as in text) — [d]) T2 प्रविमुच्यते; G1 स वि°, G2 4 प्रवि° (for विप्र°) — After 3, K4 5 V1 B D (except D1 4 7) ins (= [var] Manu 11 73, 75[ab], 76[ac], 76[cd], 79[cd])

48* लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मन ।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिरा ।
जपन्वान्यतमं वेदं योजनानां शतं व्रजेत् ।
सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ।
धनं वा जीवनायालं गृहं वा सपरिच्छदम् । [5]
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च ।

[(L 1) B1 2 लक्ष्य, Da लक्ष° K4 शस्त्रभृता शस्याद्, Da °भृतान्या (Da2 °त्मा)माद् (for °भृता वा स्याद्) Ca cites लक्ष्य शस्त्रभृता K4 विहिष्यान्, Da2 विपृशान् (for विदु°) B1 पुन° (for [आ]त्मन) — (L 2) B1 प्राश्यद् (for प्रास्येद्) Cv cites त्रिरवाक्शिरा K4 समिद्धेऽस्त्रिरवाक्शिरा, D2 3 6 समिद्धेमात्र (D5 °द्धे रणे)- वाक्शिरा — (L 3) K4 B Da D2 3 5 8 om वा. Bo 4 5 °तर (for °तम) B5 देव (for वेद) — (L 4) K. ब्रह्मविदे (for वेद°) Bo सर्वस्व वेदविदाय (for the prior half) B1 °दापयेत् (for °पादयेत्) — (L 5) K5 धात्रीं (for धन) — (L 6) K5 वा (for च) ] — After the above, D1 reads 6[ab]

4 [a]) Ś1 G1 कृच्छ्रभोगी, B2 °चारी (for °भोजी) — [b]) Ś1 (before corr) ब्रह्मयो, Ś1 (sup lin) K1 D1 ब्रह्मन (for ब्रह्महा) Da2 पूजते; D1 पूतय (for पूयते) Ś1 K1 D1 जन° (for नर°) — [c]) K1 मास मासे; K2 मास मास, K4 मासे मास, B2 मासि मासि; Da1 D4 मासमासे; Cv मासे मासे (as in text). K1 D4 7 S प्रलबस्तु; K2 फलं वस्तु; K5 क्षपयस्तु (sic), V1 समाश्नस्तु (for समश्नंस्तु) Cv cites समश्नन् (as in text) Bo 2 4 Da च (for तु) — [d]) K D4 5 व्यपोहति, Da T1 G1, 2 विमुच्यते (for प्रमु°)

5 Da1 om (hapl) 5 — [a]) K1, 4 V1 Da2 D5 7 मासादी, D4 मासासी; D6 8 वातादी (D8 °सी) (for मासाशी) — [b]) D12 पूजये, Dn2 पूर्यते — Ś1 K1 2 4 D7 8 om (hapl) 5[c]-6[b], D1 om 5[cd] — [c]) K5 B Dn D2 3 5 6 [इ]पवमन्, Da2 T °रमाद् (for °रमन्) — [d]) Da2 [ए]व (for [अ]पि) Dn1 प्रपूयते (for प्रमुच्यते)

6 Ś1 K1, 2 4 D7 8 om 6[ab] (cf. v l 5), D1 reads 6[ab] after 48*. — [a]) V1 Bo 4 Dn1 वा; T G [अ]पि (for च) — [b]) Da2 पूज्यते — [c]) K1 देवस्य, K2 V1 Da D1 ये चापि (for ये चास्य) K1 स्नाति; Da M1-3 स्नाता (for स्नान्ति) K3 5 B (except B2) Dn D2 3 5 6 8 ये चाप्यवभृथस्नाता . — [d]) V1 B (except B2) D (except Dn D1) S जना (for नरा)

7 [a]) K1 3 5 V1 B D (D7 lacuna) धू (D1 4 धु) त° (for पूत°) — [b]) D1 लभंति (for भवन्ति) G1 पुरा (for परा) Da1 श्रुतिं — D4 om (hapl) from 7[d] up to ब्रह्महा वि (in 8[c])

8 D4 om up to ब्रह्महा वि (cf v l 7) — [a]) Da वा (for तु) — [b]) Ś1 K1 4 D1 विप्रेभ्य, T2 पात्रे गा (for पात्रेभ्य°) Ś1 K2 4 5 B2 Dn D1 2 प्रतिपादयेत्; M1 3 °यत् — [c]) V1 Bo 1 2-5 D2 3 5 8 M ब्रह्महत्या (D2 5 8 °त्यां) विमुच्येत, B2 Da D7 T G मुच्यते ब्रह्महत्याया — [d]) T2 हि (for च)

9 [a]) K1, 4 सहस्रं तु (for सहस्राणि) — [b]) Dn2 D1, 4 7 पञ्चविंशति — [c]) Ś1 K1, 4 D1 तु स; D2 3 5 8 सर्वे; M1-4 च स (by transp) — [d]) D7 T1

C 12. 1253
B 12. 35. 13
K 12. 34. 13

साधुभ्यो वै दरिद्रेभ्यो दत्त्वा मुच्येत किल्बिषात् ॥ १०
शतं वै यस्तु काम्बोजान्ब्राह्मणेभ्यः प्रयच्छति ।
नियतेभ्यो महीपाल स च पापात्प्रमुच्यते ॥ ११
मनोरथं तु यो दद्यादेकस्मा अपि भारत ।
न कीर्तयेत दत्त्वा यः स च पापात्प्रमुच्यते ॥ १२
सुरापानं सकृत्पीत्वा योऽग्निवर्णां पिबेद्द्विजः ।
स पावयत्यथात्मानमिह लोके परत्र च ॥ १३
मेरुप्रपातं प्रपतञ्ज्वलनं वा समाविशन् ।
महाप्रस्थानमातिष्ठन्मुच्यते सर्वकिल्बिषैः ॥ १४
बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः ।
समितिं ब्राह्मणैर्गच्छेदिति वै ब्राह्मणी श्रुतिः ॥ १५
भूमिप्रदानं कुर्याद्यः सुरां पीत्वा विमत्सरः ।
पुनर्न च पिबेद्राजन्संस्कृतः शुध्यते नरः ॥ १६
गुरुतल्पी शिलां तप्तामायसीमधिसंविशेत् ।

---

G1. 2 4 [ऽ]पि प्रमु° (for विप्रमु°) — After 9, D6 reads 12

10 K4 om (hapl) 10–11 —[a]) Da2 सवासानां; D1 सवरस तु (for °स्सानां) —[b]) K2 T2 प्राणसक्षये, D8 °संशय° — Bo om 10[c]–12[d] —[d]) D1 मुच्यते सर्वकिल्बिषात्

11 K4 Bo om. 11 (cf. v l 10) —[a]) D8 वा (for वै). Da1 चाश्वस्तु; T2 अश्वांश्च (for वै यस्तु) —[c]) D7 T G महाराज (for महीपाल) —[d]) D4 om च. D8 5 8 सर्वपापै° (for स च पापात्) B2 M3 4 विमुच्यते

12 Bo 1 D7 om (hapl.) 12 (for Bo, cf v l 10) D6 reads 12 after 9 —[a]) K8 D4 मनोहर; Ca °रथं (as in text) —[b]) Ś1 K4 D1 एकस्माय (K4 °द)पि भारत, K1 M1. 8 एक(K1 °का)स्मायापि भा°; K5 V1 B3–5 D2 3 5 8 एकस्मै यदि भा°, B2 कस्यचिन्मनुजेश्वर, Da कर्मविन्मनुजेश्वर, D4 एकाश्वमपि भारत (sic), T G एकस्मै भरत(G1–3 पुरुष)र्षभ —[c]) K8 V1 D4 कीर्तये च (V1 °येच्च), B2 Da °यति (for °येत) B3 5 यो दत्त्वा (by transp.), Da दत्त्वा च S न कीर्तयेच्च (T1 G3 4 °ये च) तद्दत्त्वा —[d]) K5 D2 3 5 8 सर्वपापै°, B2 Da सोऽपि पापाद् (for स च पापात्) B3 Da M2 4 विमुच्यते (for प्रमु°)

13 [a]) K1 3 V1 B1. 3–5 Dn D1–6 8 सकृत्कृत्वा; K5 च य° कृत्वा, D7 S तु य कुर्याद् (M कृत्वा) B2 Da कृत्वा चाथ सुरापान (Da °णम्) — 13[b] = (var) Manu 11 90[b] —[b]) Da M2 4 अग्नि°, D7 T G M1 3 वह्नि° (for योऽग्नि°). K5 B2. 4 (marg) Da Dn1 D2 3. 5 8 सुरा पिबेत्, D4 G1–3 पिबेच्चर, M2 द्विज° पिबेत् (by transp) K2 योऽग्निवर्णं भते द्विज (sic); Cv अग्निवर्णां सुरां पिबेत् —[cd]) M3 पातयति (for पाव°). Ś1 ययात्मानम् (hypermetric) (for [अ]या°). T2 स पावयेद्यया लोके परत्र च महीपते.

14 [a]) V1 B Da Dn D2 3 5–8 M4 मरुप्रपातं, D1 भृगु°, D4 मेरुप्रपातान्, T G M2 मरूप्रपात, Ca मेरु प्रपात (as in text) K4 M2 प्रपतेज्, Dn2 °तज्, D1 प्रयत, G3 प्रतपन् (for प्रपतन्) M1 3 मरुप्रपात पतन —[b]) B1 2 M1 3 च (for वा) K2 4 5 D2 M3 4 समाविशेत् —[c]) Ś1 K1 4 आतन्वन् (for आति ष्ठन्). —[d]) Bo 5 D7 S (except M1 3) सर्वकिल्बि पात्.

15 [a]) K2 बृहस्पतिं वने दृष्ट्वा, D4 °तिसर्वेनष्ट्वा; D6 °तिसवैरिष्ट्वा. —[b]) Da D1 G1 ब्रह्मण° —[c]) D2 3 स शुद्धिं (for समितिं) K2 4 5 V1 B1 5 Dn D2 3 5 6 ब्राह्मणो; K3 Bo 3 4 Da D4 8 M4 ब्रह्मणो, G1 ब्रह्मणैर् T2 ब्राह्मणै° संगम गच्छेद् —[d]) B3 T G M3 4 इती(G1 °ति)यं; D7 M1 3 द्वितीयं (for इति वै) K4 5 V1 Bo 1 3–5 Da1 Dn D2 3 8 ब्रह्मण°; B2 वैदिकी; Da2 ब्रह्मणां, D5 6 ब्राह्मण; D7 ब्राह्मणे; T1 G1. 3 4 ब्रह्मणी. Ś1 D1 स्मृति (for श्रुति°)

16 [a]) D6 भूति°, M1 3 भूमि (for भूमि°) Bo °दान प्र, Dn2 प्रदान, D1 प्रशान (for प्रदान) — K3 om from न कुर्याद्य° up to तप्ता (in 17[a]) K1 B3 D4 M य° कुर्यात् (by transp) D8 च (for य) D7 T G उदपा(G1 उपादा)नं शिव कुर्यात —[b]) K4 D1 4 8 सुरा K5 विशेषत° (for विमत्सर) —[c]) K2 पिबते (for पिबेद्) B3 चापि, Da ब्रह्मन् (for राजन्) —[d]) K4 5 V1 B Da Dn D1–6 8 T2 संस्कृत° स च (K5 वि) शुध्यति, D7 T1 G M °त. स च (D7 om च) शुध्यते

17 K3 om up to तप्ता (cf v l 16) —[a]) Da2 गुरुतल्पा, D1 °तल्पीं —[b]) K3 5 B (except B1) Da Dn D6 अभि, D7 T G वाथ (for अधि) —[c]) Ś1 K4 V1 Da1 T2 G1 3 प्राणाबाधा(K4 G3 °दा)य, K1 2 पाणावादाय, D4 G2 पाणोवाधाय (for पाणावाधाय) K2 4 वै (for वा) Ś1 वो शेप (for वा शेफ). K3 G1 शेफ°; K4 शेय; Da1 शेप; D4

पाणावाधाय वा शेफं प्रव्रजेदूर्ध्वदर्शनः ॥ १७
शरीरस्य विमोक्षेण मुच्यते कर्मणोऽशुभात् ।
कर्मभ्यो विप्रमुच्यन्ते यत्ताः संवत्सरं स्त्रियः ॥ १८
महाव्रतं चरेद्यस्तु दद्यात्सर्वस्वमेव तु ।
गुर्वर्थे वा हतो युद्धे स मुच्येत्कर्मणोऽशुभात् ॥ १९
अनृतेनोपचर्ता च प्रतिरोद्धा गुरोस्तथा ।
उपहृत्य प्रियं तस्मै तस्मात्पापात्प्रमुच्यते ॥ २०
अवकीर्णिनिमित्तं तु ब्रह्महत्याव्रतं चरेत् ।
खरचर्मवासाः षण्मासं तथा मुच्येत किल्बिषात् ॥ २१
परदारापहारी च परस्यापहरन्वसु ।
संवत्सरं व्रती भूत्वा तथा मुच्येत किल्बिषात् ॥ २२
स्तेयं तु यस्यापहरेत्तस्मै दद्यात्समं वसु ।
विविधेनाभ्युपायेन तेन मुच्येत किल्बिषात् ॥ २३
कृच्छ्राद्द्वादशरात्रेण स्वभ्यस्तेन दशावरम् ।

C 12. 1287
B 12. 35. 27
K 12 34 27

---

शिश्नं, M1-3 शेपं (for शेफं) K5 पाणावधान्वा शेप (submetric), B0 4 अपकृन्त्यात्मन शेफ (B4° फं), B1. 2 अप(B1 °प्र)कृन्त्यात्मन (B3 °ना) शेफ, B5 Dn D2 6 अवकृन्त्यात्मन शेफ (Dn1 °प), D1 प्रोत्कृत्य चात्मन शिश्नं, D3 5 8 अपकर्त्यात्मन शेफ, D7 प्राणावाधायात्र शेप (sic) — [d]) D4 प्रव्रजेद् (for प्रव्र°) Da1 G2 M2 °दर्शनं, Da2 °दर्शना, G1 (before corr) °दर्शिन D7 प्रसृजेदूर्ध्वदर्शक

18 [a]) M2 [अ]पि मोक्षेण (for विमो°) — [b]) Da1 कर्मणा — D7 G2 om. (hapl.) $18^{c}$–$19^{d}$ — [c]) K4 Da2 विप्रमुच्येते, Da1 T2 °च्येत, D4 °च्यते, G3 [ऽ]पि विमुच्यन्ते G4 कर्मणोपि प्रमुच्यते — [d]) Ś1 K1. 2 D1. 6 T2 यत°, K4 यं ता, B Da Dn1 D3 5 T1 G (G2 om.) M (except M2) य(B1 र)ता (for यत्ता°) T2 तु य (for स्त्रिय°)

19 D7 G2 om. 19 (cf v l. 18) — [a]) T2 एवं (for यस्तु) — [b]) K2. 5 Dn2 D2-4 6 च, D5 8 S (G2 om.) वा (for तु) Da प्रदद्यात्सर्वमेव तु — [c]) Ś1 K1 D1 गुर्वर्थं; M1 3 °र्थो D2 हतैर्, G1 हृतो, G3 हते (for हतो). M1 युद्दे (for युद्धे) — [d]) V1 B2 Da D5 मुच्यते, G3 विमुच्येत् (for स मु°) D1 स मुच्येत्सर्वकिल्बिषैः

20 $20^{ab}$ = 12 35 $7^{cd}$ — [a]) Da D6 अनृते च, D1 अनृत्तेन (for अनृतेन) K2 5 D1. 8 [उ]पवर्ता, B1. 2. Da Dn2 D5-6 M2 °वर्ता, T G °वक्ता (for °चर्ता) K5 Dn D2 3. 5 8 चैव, B0 4 5 य, D4 तु (for च) K3 4 अनृतेनोपचरति — [b]) K2 चाग्निरोधाद्, K4 वा निरोद्धा, D7 T G2-4 M2 4 प्रतिरुध्या (for °रोद्धा) B2 गुरुम् T1 G1 2 4 तदा (for तथा) — [c]) K2 5 V1 B Dn D5 उपाहृत्य, Da D2. 3 8 उपहृत्य, T1 G °गृह्य (for °हृत्य) — [d]) B2 Da D7 S मनसः प्रीतिकारक (Da T2 °के, D7 °कः, M1. 2 °णं)

21 [a]) B1 damaged K4 B0 Da1 T1 G4 अवकीर्णं, D8 M1 3 4 अव(D8 °प)कीर्ति, G2 °कीर्णो (for °कीर्णि) M1-2 निमित्तात् B0 5 S (except M2) च (for तु) D7 निमित्तब्रह्महत्या च — [b]) D7 अवकीर्ण-, M1 3 ब्रह्मवध्यो (for °हत्या) B2 Da1 -सम (for -व्रत) — [c]) Hypermetric Ś1 K1 3 B1 Da D1 गोचर्मवासा, K2 गोकर्णवासा, K4 सर्वांगवासा, D1 गोचर्मवसो K (except K4) V1 B1 2 3 m 5 Da Dn D4 6 षण्मासास् (for षण्मास) D7 खरचर्मवसा षड्विस — [d]) D7 T1 G1 3 4 ततो (for तथा) D6 सङ्कटात् (for किल्बिषात्)

22 Da2 G2 om (hapl ) 22 — [a]) K5 B2 G1 -सेवी, V1 B3 4 (both marg as in text) Dn D6 -चारी (for हारी) V1 B0 2 5 Dn D2 3 5 G1 तु (for च) K3 Da1 D4 7 T G3 4 M परदारोपसेवी तु (Da1 च), D8 धनं तु यस्यापहरेत् (cf $23^{a}$) — [b]) D8 तस्मैस्य (for परस्य) D7 S (G2 om ) [अ]प(M1 3 4 [उ]प)हरेद् (for °हरन्) — K1 om $22^{cd}$ — [c]) D4 7 G1 M2 सवत्सर D7 T G1. 3 4 -व्रत ती(D7 ची, T G4 च)र्त्वा (for व्रती भूत्वा) — [d]) Ś1 K4 तस्मान्, Da1 ततो, D7 सदा, M2 4 तदा (for तथा)

23 D7 om. (hapl ) 23 K1 transp $23^{ab}$ and $23^{cd}$ — [a]) K3 5 V1 B0 3-5 Da Dn D2 3 5 6 8 धनं, B2 T G1 3 4 स्तेनस्, G2 स्तेन, M1 3 स्तैन्यात्, M2 4 स्तैन्य (for स्तेयं) D1 स्तेयेन (for स्तेय तु) — [c]) M त्रिविधेन (for विविधेन) K4 Dn2 D3 G4 [अ]प्युपायेन (for [अ]भ्यु°) — [d]) K3 Dn D2 4 तदा, K5 V1 B (B2 damaged) D3. 5 6 8 तथा, Da T1 G1 3 4 M1 3 स्तेनो, T2 ततो (for तेन)

24 [a]) Ś1 K4 B2 Dn2 कृच्छ्र, Da2 कृच्छ्रे, D1 कृच्छ्री, Cv as in text — [b]) D4 ? शीचरन्, T1 G1 3 4 M1 3 दशापरं (for °वरम्) K5 V1 B Da Dn D1-3 5 6 8 संयतात्मा चरेत्स्थित — [c]) B2 परि

C 12 1865
B 12 52 4
K 12 51 4

त्वत्तस्तन्निःसृतं देव लोका बुद्धिमया हि ते ॥ ४
कथयेद्देवलोकं यो देवराजसमीपतः ।
धर्मकामार्थशास्त्राणां सोऽर्थान्ब्रूयात्तवाग्रतः ॥ ५
शराभिघाताद्व्यथितं मनो मे मधुसूदन ।
गात्राणि चावसीदन्ति न च बुद्धिः प्रसीदति ॥ ६
न च मे प्रतिभा काचिदस्ति किंचित्प्रभाषितुम् ।
पीड्यमानस्य गोविन्द विषानलसमैः शरैः ॥ ७
बलं मेधाः प्रजरति प्राणाः संत्वरयन्ति च ।
मर्माणि परितप्यन्ते भ्रान्तं चेतस्तथैव च ॥ ८
दौर्बल्यात्सज्जते वाक्मे स कथं वक्तुमुत्सहे ।
साधु मे त्वं प्रसीदस्व दाशार्हकुलनन्दन ॥ ९
तत्क्षमस्व महाबाहो न ब्रूयां किंचिदच्युत ।
त्वत्संनिधौ च सीदेत वाचस्पतिरपि ब्रुवन् ॥ १०
न दिशः संप्रजानामि नाकाशं न च मेदिनीम् ।
केवलं तव वीर्येण तिष्ठामि मधुसूदन ॥ ११
स्वयमेव प्रभो तस्माद्धर्मराजस्य यद्धितम् ।
तद्ब्रवीह्याशु सर्वेषामागमानां त्वमागमः ॥ १२
कथं त्वयि स्थिते लोके शाश्वते लोककर्तरि ।

---

D4 °मये (for °मया) K8 त, B1 ह (for ते).

5 [a]) B1 T2 कथयद् (B1 °न्) K1 lacuna, K4 देवलोकोय, Dn1 D4 T2 °लोके यो, D8 °लोक से (for °लोक यो) — [b]) D8 देवलोक (for देवराज). Dn2 (before corr) समीहित (for समीपत) — [c]) K2 8 5 B6 Da Dn D1 2 4 6 7 G1 2 M1 3 4 मोक्षाणां (for शास्त्राणां). K1 V1 B1-5 D8 5 T G3 4 M2 धर्मार्थकाममोक्षा(K1 °शास्त्रा)णा — [d]) K2-4 V1 B Da Dn D2 3 5-7 T2 G2 3 M सोर्थं, K6 सो वै; D1 सार्थं, D8 सोय, T1 G1 3 4 कोर्थं (for सोऽर्थान्) K8 D4 असशय (for तवाग्रत)

6 [a]) K4 D7 T G शराभिघात, K6 V1 B6 8 5 Da Dn D2 3 5 6 °तापाद्, B1 °तस, B2 4 °पाताद् (for °घाताद्). — [c]) D2 5 6 मम, G1 वाचा (for चाव) — [d]) K6 D4 (sup lin) दृष्टि, D4 धृष्टि (for बुद्धि)

7 [a]) D7 T G हि (for च) K4 कश्चिद् (for काचिद्) — [b]) K1 4 Da D1 प्रभाषितं — [c]) Dn2 (before corr) पीड्यमानेषु (for °मानस्य) — [d]) K2, 8 D4 निभै (for समै)

8 [a]) K1 D1 बल मेदो जरयति; K2-4 बलं मेधा (K3 वै मे) प्रजहाति, K6 V1 B Da Dn D2 3 5 6 बल (Da1 °ले) मे प्रजहातीव, D4 बलं चेमे प्रजहातिव (sic), D7 T G2-4 M2 4 प्रजहाति बल वै मा (T1 G2 4 वै मा, M2 4 चैव), M1 3 प्रजहाति वल वै मा, G1 प्रजहाति बलीवैमा (sic) — [b]) Ś1 K1 D1 सता(Ś1 °त)रयति, D4 M4 सत्वर°; D3 तत्वर° (for सत्वर°) — [c]) Ś1 K6 V1 B (except B1) Da Dn D2 3 5-7 परितप्यति (for °तप्यन्ते) — [d]) K8 D4 मम चै(D4 चे)तस्, K4 B5 Dn भ्रांतचित्तस्; K6 D1 G1 भ्रात (K6 °ते)चेतस्, V1 B6 1, 3 4 Da D2 3, 5 6 भ्रातचेता (B3 °ता)स्, B2 भ्रातचेतास्, M1 गात्र चेतस् (for भ्रान्त चेतस्) V1 B Da Dn D2 3, 5 6 तथा ह्यय (for तथै व च).

9 [a]) Ś1 Da2 दौर्बल्या(Da2 °ला)न्, M1 सज्जतो (for °ते) B1 वाक्य (for वाक्मे) K1 दौर्बलीमज्जते वाग — [c]) B1 साधये त्वां, D4 साधुमेव (for साधु मे त्व) D8 प्रसीद त्व (for °दस्व). — [d]) D8 दाशाह (for दाशार्ह) V1 B Da Dn D2 3 5 6 G2 -कुलवर्धन (for °नन्दन) T2 भगवन्करुणाकर

10 T2 om (hapl) 10-11 — [a]) B1 क्षक्षमस्य (for तत्क्षमस्व) — [b]) D8 G1 ब्रूयात् (for ब्रूया) — [c]) K2 8 5 V1 Da Dn D7 S (T2 om) च (M4 हि) सीदेद्धि, B6 5 विसीदेच, B3 4 D2 3 5 6 विषी, देच; D1 च सीदेच, D8 च सीदति (for च सीदेत) — [d]) D1 वाचा पतिर् (for वाचस्पतिर्)

11 T2 om 11 (cf v 1 10) — [a]) Da प्रतिजानामि (for सप्र°)

12 [a]) B1 स्वयम् (for स्वयम्) K3 5 D4 8 विभो V1 B Da Dn D2 3 5-7 S भवास् (for प्रभो) — [b]) Da1 धीमत (for यद्धितम्) — [c]) V1 B Da Dn D2 3 5-7 S ब्रवीत्वाशु, D8 °वाशु (for °ह्याशु) — [d]) D7 T1 G समागम (G2 °म, G3 °त) (for त्वमागमः) D8 सस्थानस्व ममाग्रत (sic)

13 [a]) K2 कस्त्वं (for कथ) Da1 स्थिरे (for स्थिते) K8 5 V1 B D (except D1) S कृष्ण (Dn2 °ष्णे) (for लोके). — [c]) Da यद् (for प्र). — [d])

प्रब्रूयान्मद्विधः कश्चिद्गुरोः शिष्य इव स्थिते ॥ १३
वासुदेव उवाच ।
उपपन्नमिदं वाक्यं कौरवाणां धुरंधरे ।
महावीर्ये महासत्त्वे स्थिते सर्वार्थदर्शिनि ॥ १४
यच्च मामात्थ गाङ्गेय बाणघातरुजं प्रति ।
गृहाणात्र वरं भीष्म मत्प्रसादकृतं विभो ॥ १५
न ते ग्लानिर्न ते मूर्छा न दाहो न च ते रुजा ।
प्रभविष्यन्ति गाङ्गेय क्षुत्पिपासे न चाप्युत ॥ १६
ज्ञानानि च समग्राणि प्रतिभास्यन्ति तेऽनघ ।
न च ते क्वचिदासक्तिर्बुद्धेः प्रादुर्भविष्यति ॥ १७
सत्त्वस्थं च मनो नित्यं तव भीष्म भविष्यति ।
रजस्तमोभ्यां रहितं घनैर्मुक्त इवोडुराट् ॥ १८
यद्यच्च धर्मसंयुक्तमर्थयुक्तमथापि वा ।
चिन्तयिष्यसि तत्राग्र्या बुद्धिस्तव भविष्यति ॥ १९
इमं च राजशार्दूल भूतग्रामं चतुर्विधम् ।
चक्षुर्दिव्यं समाश्रित्य द्रक्ष्यस्यमितविक्रम ॥ २०
चतुर्विधं प्रजाजालं संयुक्तो ज्ञानचक्षुषा ।
भीष्म द्रक्ष्यसि तत्त्वेन जले मीन इवामले ॥ २१
वैशंपायन उवाच ।
ततस्ते व्याससहिताः सर्व एव महर्षयः ।
ऋग्यजुःसामसंयुक्तैर्वचोभिः कृष्णमर्चयन् ॥ २२
ततः सर्वार्तवं दिव्यं पुष्पवर्षं नभस्तलात् ।

C 12 1854
B 12 52 23
K 12.51 23

---

Da2 गुरुशिष्य B1 इति (for इव) K2 4 स्थित, D8 स्थिरे (for स्थिते)

14 D3 om the ref T2 G2 श्रीभगवान् (for वासुदेव) — $^{d}$) B1. 3 Dn D3 . G1 (before corr) स्थिरे, D8 स्थिति° (for स्थिते) K4 G1 सर्वार्थदर्शिन (G1 °नी), V1 M2 धर्मार्थदर्शिनि (for सर्वार्थ°)

15 D4 om 15 D8 om. 15–17 — $^{a}$) Ś1 K1 Da D1 यश्च, K3 यस्त्व (for यच्च) K1 D1 माम (D1 °मा)र्थ (for मामात्थ) — $^{b}$) K2 घातरग, B1 °पातरज, Da1 वातरुत, Da2 वानरुज (for °घातरुज) — $^{d}$) V1 Dn2 M2 मत्प्रसादात् K3 5 B (except B3) Da1 Dn प्रभो (for विभो)

16 D3 om. 16 (cf v l 15) — $^{a}$) D7 न ते सजायते मूर्छा — $^{b}$) D7 T G M1 3 तापो (for दाहो) V1 जरा, B1 Da Dn2 M2 रुज D4 न ते दाहो न ते क्लम° — $^{c}$) K4 D2 4 6 G1 प्रभविष्यति (for °विष्यन्ति) — $^{d}$) D7 om from से न up to गाङ्गेय° (in 23$^{d}$) B1 वाप्युत, Da1 G1 चाच्युत, Da2 वाच्युत (for चाप्युत)

17 D7 8 om 17 (cf v l 16, 15) — $^{a}$) M2 4 ज्ञानानि चापि सर्वाणि — $^{b}$) V1 प्रभविष्यति; D2 प्रतिभास्यति — $^{c}$) D1 कश्चिद् (for क्व°) K5 B1 Da आद्यक्तिर् (for आसक्तिर्) Ca cites आसक्ति° (as in text) — $^{d}$) Ś1 D1. 4 बुद्धि (for बुद्धे°)

18 D7 om. 18 (cf v l 16) G1. 8 om 18$^{ab}$ — $^{a}$) D1 त्वत्स्थ — $^{c}$) B2 3 D1–3 5 6 रहितो; T G निर्मुक्त (for रहित) — D3 om 18$^{d}$–20$^{a}$ — $^{d}$) K4 मुक्तम्, D2 मुक्ता

19 D7 8 om 19 (cf v l 16, 18) — $^{a}$) B1 वचश्च, D4 यद्यत्त (for यद्यच्च) G1. 2 धर्मे (for धर्म) — $^{b}$) K1 om अर्थयुक्तम् D1 अर्थयुक्ते V1 B Dn D2 5 5 6 S (except G2) च (for वा) — $^{c}$) K1 चिंतयिष्यामि, G1 °यिष्यति D1 तत्रास्था (for °ग्र्या) — $^{d}$) M1 मधिस् (for बुद्धिस्)

20 D7 om. 20 (cf v l 16) D8 om 20$^{a}$ (cf v l 18) — $^{a}$) M1 8 इदं (for इमं) — $^{b}$) Ca as in text — $^{c}$) D1 चतुर्दिव्यं — $^{d}$) Da D1 अमितविक्रम (Da1 °म, D1 °मे)

21 D7 om. 21 (cf v l 16) D1 reads 21$^{ab}$ twice — $^{a}$) V1 B0–3 Da Dn2 D1 (second time) 2 6 M समरत, B4 5 Dn1 D3 5 सवरत (for चतुर्विधं) Ś1 K1 D1 (first time) 8 प्रजापाल (D1 °ल), K2 4 क्रियाजाल, G1 भुजा (for प्रजा) — $^{b}$) D1 (first time) संयुत, D4 सयुक्त (for संयुक्तो) — $^{c}$) Da1 द्रक्ष्यति, D8 द्रक्षसि, T2 लक्ष्यसि Da1 सत्त्वेन (for तत्त्वेन) — $^{d}$) V1 B0 Da D8 T2 M मीनम् D8 [अ]नले

22 D7 om 22 (cf v l 16) D8 M4 om the ref — $^{c}$) Ś1 K5 V1 B Da Dn D2 3 5 6 °सहितैर् (for सयुक्तैर्) — $^{d}$) K3 5 B2 Dn1 D1 M3 आर्चयन्, D2 3 5 6 अस्तुवन् (D2 °द्), D8 अर्पया (अर्चयन्)

C 13 1884
B 12 52 23
K 12 51 23

पपात यत्र वार्ष्णेयः सगाङ्गेयः सपाण्डवः ॥ २३
वादित्राणि च दिव्यानि जगुश्चाप्सरसां गणाः ।
न चाहितमनिष्टं वा किंचित्तत्र व्यदृश्यत ॥ २४
ववौ शिवः सुखो वायुः सर्वगन्धवहः शुचिः ।
शान्तायां दिशि शान्ताश्च प्रावदन्मृगपक्षिणः ॥ २५
ततो मुहूर्ताद्भगवान्सहस्रांशुर्दिवाकरः ।
दहन्वनमिवैकान्ते प्रतीच्यां प्रत्यदृश्यत ॥ २६
ततो महर्षयः सर्वे समुत्थाय जनार्दनम् ।
भीष्ममामन्त्रयांचक्रू राजानं च युधिष्ठिरम् ॥ २७
ततः प्रणाममकरोत्केशवः पाण्डवस्तथा ।
सात्यकिः संजयश्चैव स च शारद्वतः कृपः ॥ २८
ततस्ते धर्मनिरताः सम्यक्तैरभिपूजिताः ।
श्वः समेष्याम इत्युक्त्वा यथेष्टं त्वरिता ययुः ॥ २९
तथैवामन्त्र्य गाङ्गेयं केशवस्ते च पाण्डवाः ।
प्रदक्षिणमुपावृत्य रथानारुरुहुः शुभान् ॥ ३०
ततो रथैः काञ्चनदन्तकूबरै-
र्महीधराभैः समदैश्च दन्तिभिः ।
हयैः सुपर्णैरिव चाशुगामिभिः
पदातिभिश्चात्तशरासनादिभिः ॥ ३१
ययौ रथानां पुरतो हि सा चमू-
स्तथैव पश्चादतिमात्रसारिणी ।
पुरश्च पश्चाच्च यथा महानदी

23 D7 om up to गाङ्गेय (cf v 1 16). — [a]) K5 Dn1 सर्वर्तवं; V1 B2 Da स्वनार्तव; Bo 4 D2 6 सार्वर्तव; Dn2 सर्वर्तुकं, D1 सर्वार्तुवे (sic), M4 सर्वार्थवद् (for सर्वर्तव) — [b]) T2 G2 M2 नभस्थलात् — [d]) D7 च पांडव° (for सपाण्डव°)

24 G1 om 24–25 — [a]) Dn सर्वाणि (for दिव्यानि) — [b]) D8 जग्मुश् (for जगुश्) Ś1 K1 2 D1 अप्सरसां (D1 °सो), D4 चाप्सरस (for चाप्सरसा). — [c]) Ś1 K2 4 D1 अदृष्ट; K1 असृष्टं (for अनिष्ट) K5 V1 B Da Dn D2 3 5–8 T G (G1 om) च (for वा) — [d]) K3 D4 अत्र (for तत्र) K5 V1 B1–4 Da Dn D2 3 5 6 प्रदृश्यते (K5 °त); Bo प्रदिश्यते, D7 ह्यदृश्यत; D8 स्म दृश्यते (for व्यदृश्यत) D1 तत्रादृश्यत किंचन.

25 G1 om 25 (cf v 1 24). D8 om (hapl) 25–26 — [a]) T2 शीतः (for शिव°) — [c]) Da1 पश्यताया (sic) (for शान्तायां) D1 शाताया M1 3 शातायांदिशि शाताश्च (sic) — [d]) V1 Bo 3–5 D2–6 प्राणदन्, D1 प्रावय, D7 प्रापतन् (for प्रावदन्). K3 मुनि (for मृग-)

26 D8 om 26 (cf v 1 25) — [c]) D7 इह (for इव) — [d]) D1 दिशि (for प्रति-) K1 प्रतीश्यांतमदृश्यत (sic)

27 [b]) K1 समुत्काय, Da °स्थाप्य (for °स्थाय) D8 जनार्दन — [c]) K1 D8 आमन्त्रयाचक्रे; D1 G2 चामन्त्रयांचक्रू (D1 °क्र).

28 [a]) K4 तत पयाताले सर्वे — [b]) Ś1 K1 केशव पांडवास्, T2 पाडव° केशव (by transp) K5 D3 तदा (for तथा) K2 V1 B Da Dn D2 3 5.6 केशव सहपाडव — [c]) Da1 सात्यकिं K4 Da सजयश् (Da1 °य) (for सजयश्) — [d]) V1 Da1 सारद्वत

29 [a]) V1 धर्मनियता, Da कृष्णसहिता, T2 धर्मसहिता (for °निरता) — [b]) T2 अधि, G2 अपि (for अभि) Da1 पूजित, G1 पूजितै — [c]) Dn2 (before corr) स्व (for श्व°) — [d]) G1 चरिता (for त्वरिता)

30 [b]) K3 V1 B1–4 Dn D2 6 7 केशव पाडवास्तथा (B3 4 D2 6 °स्तदा, D7 om स्तथा), Bo 5 Da D3.5 केशव पाडवस्तदा (Da °था) — [c]) Da T2 अथावृत्य (for उपा°) — [d]) Bo 3–5 D2 3 5 6 स्वकान्, D7 तदा, T2 तथा (for शुभान्)

31 [a]) K3 5 Dn D4 चित्र, V1 Bo 2–5 Da D2 3 5 6 रत्न, B1 रक्त, D8 -दत्त; S (except G2) -दांत (for दन्त) D1 कूबर (for कूबरैर्) — [b]) G1 सह दैव, M1 3 समरैश्च (for समदैश्च) — K1 om (hapl) 31[cd] — [c]) Da बभौ, D1 ययै (for हयै) D8 G1 (before corr) सुवर्णैर् (for सुप°) D3 वायुगामिभि° (for चाशु°) — [d]) D8 चात्त- (for चात्त-) M3–4 -शरासनासिभि (for °दिभि)

32 [a]) K4 च (for हि). — [b]) G1 असुमात्र (for अतिमात्र) B1 चारिणी; Dn2 D8 सारिणि (D8 °णा); T1 G -कारिणी (for -सारिणी) D4 om from णी up to भगवान्नि (in 33[a]) — [c]) B1 पुनश्च

पुरर्क्षवन्तं गिरिमेत्य नर्मदा ॥ ३२
ततः पुरस्ताद्भगवान्निशाकरः
समुत्थितस्तामभिहर्षयंश्चमूम् ।
दिवाकरापीतरसास्तथौषधीः
पुनः स्वकेनैव गुणेन योजयन् ॥ ३३

ततः पुरं सुरपुरसंनिभद्युति
प्रविश्य ते यदुवृषपाण्डवास्तदा ।
यथोचितान्भवनवरान्समाविश-
ञ्श्रमान्विता मृगपतयो गुहा इव ॥ ३४

इति श्रीमहाभारते शान्तिपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

# ५३

वैशंपायन उवाच ।
ततः प्रविश्य भवनं प्रसुप्तो मधुसूदनः ।
याममात्रावशेषायां यामिन्यां प्रत्यबुध्यत ॥ १
स ध्यानपथमाश्रित्य सर्वज्ञानानि माधवः ।
अवलोक्य ततः पश्चाद्दध्यौ ब्रह्म सनातनम् ॥ २
ततः श्रुतिपुराणज्ञाः शिक्षिता रक्तकण्ठिनः ।
अस्तुवन्विश्वकर्माणं वासुदेवं प्रजापतिम् ॥ ३
पठन्ति पाणिस्वनिकास्तथा गायन्ति गायनाः ।

C 12 1899
B 12 53 4
K 12 52.4

---

( for पुरक्ष ) Bo तथा ( for यथा ) — d) K1 पुरक्ष वत, K2 3 5 V1 B Da Dn D2 3 . 6 वसूक्षव( Dn1 °स )त, D1 च सूक्ष्यवत, D7 8 पुरक्षयत ( D8 °त्या ), T2 पुन क्षिपत, G1 पुनर्जंवत ( for पुर° ) K5 D1 2 6 एति ( for एत्य ) K1 नद्दा, V1 दुर्मदा, G1 3 4 निर्मदा Cv ऋथर्क्षवन्त गिरिमेति नर्मदा

33 D4 om up to भगवानि ( cf v 1 32 ) — a) K3 4 च पश्चाद् ( for पुरस्ताद् ) Da1 G1 भगवन् — b) Ś1 अभिमर्पयन्, Da D4 T2 अति( T2 °पि)हर्पयन् ( for अभि° ) D4 8 चमू — c) Dn महौषधी°, G1 वर्धी° ( for वर्धा° ) — d) D1 स्वकेनेव, D8 स्वकीयेन ( for स्वकेनैव ) M4 योनयन् B1 पुन स्वकेरेव गुणैर योनयत्

34 a) K4 D2 सुर**, Dn° सुरपति ( for °पुर ) K. Dn °समित, D1 सनिभ ( for संनिभ ) K1 4 B1 Dn1 D1-3 5-7 T1 G1 3 4 °द्युतिं, B3 द्युति ( for द्युति ) — b) K4 B1 Da यदुनृप, D1 lacuna ( for यदुनृप ) K4 B2 Da1 तथा ( for तदा ) — c) K3 D4 भुवननरान, T2 भरतगृहान् G1 समादिशन् ( for °विशन् ) V1 यथोचित ते भवन समाविशत् — d) K2 4 D7 8 S श्रमान्विता, K3 श्रमा° ( for श्रमा° ) K1 D1 यथा गुहां, K2 गुहा यथा, V1 Da G3 ( before corr ) M1-3 गुहा( Da °हो)मिव, T2 गुहा इति.

Colophon — *Sub parvan* Ś1 K V1 B Da Dn D1-7 T2 G1 2 M राजधर्म — *Adhy name* T1 G भीष्मवरप्रदान्, M1 8 वरप्रदान — *Adhy no* ( figures, words or both ) K5 B4 Da1 Dn D7 S 52 ( as in text ), B1 51, D2 8 50 — *Śloka no* Dn1 34, D3 28

## 53

1 D8 om the ref — a) K3 भुवन V1 B Da Dn D2 3 5 6 M तत शयनमाविश्य ( M °श्रित्य ) — b) D2 सुपुप्तो, D4 प्रहृष्टो, D7 T G प्रशिश्ये ( for प्रसुप्तो ) — c) K2 3 V1 B2 4 Da Dn मात्रार्धं ( for °मात्राव ) — d) Bo T2 रजन्या ( for यामिन्या ) K4 प्रत्यपद्यत, D1 °वादित ( for °बुध्यत )

2 a) Dn1 ज्ञानपथम्, D7 T G ( except G2 ) M4 ध्यानपदम् ( for °पथम् ) K1 4 V1 B Da Dn D1-3 5-7 T2 M2 आविश्य, D3 आस्थाय ( for आश्रित्य ) K8 5 D4 अथ स ध्यानमाविश्य — c) Dn2 तप ( for तत ) — d) B1 सनातन

3 a) D7 T G सूता ( for तत ) K2 4 5 V1 B Da1 Dn D1-3 S स्तुति, Da2 त्रिपु ( for श्रुति ) — b) K2 V1 B Da Dn D2 3 5-7 S रक्तकंठा ( M1 °ठ ) सुशिक्षिता

4 a) Da2 T2 पतति ( for पठन्ति ) V1 lacuna

शङ्खानकमृदङ्गांश्च प्रवाद्यन्त सहस्रशः ॥ ४
वीणापणववेणूनां स्वनश्चातिमनोरमः ।
प्रहास इव विस्तीर्णः शुश्रुवे तस्य वेश्मनः ॥ ५
तथा युधिष्ठिरस्यापि राज्ञो मङ्गलसंहिताः ।
उच्चैरुर्मधुरा वाचो गीतवादित्रसंहिताः ॥ ६
तत उत्थाय दाशार्हः स्नातः प्राञ्जलिरच्युतः ।
जप्त्वा गुह्यं महाबाहुरग्नीनाश्रित्य तस्थिवान् ॥ ७
ततः सहस्रं विप्राणां चतुर्वेदविदां तथा ।
गवां सहस्रेणैकैकं वाचयामास माधवः ॥ ८
मङ्गलालम्भनं कृत्वा आत्मानमवलोक्य च ।
आदर्शे विमले कृष्णस्ततः सात्यकिमब्रवीत् ॥ ९
गच्छ शैनेय जानीहि गत्वा राजनिवेशनम् ।
अपि सज्जो महातेजा भीष्मं द्रष्टुं युधिष्ठिरः ॥ १०
ततः कृष्णस्य वचनात्सात्यकिस्त्वरितो ययौ ।
उपगम्य च राजानं युधिष्ठिरमुवाच ह ॥ ११
युक्तो रथवरो राजन्वासुदेवस्य धीमतः ।
समीपमापगेयस्य प्रयास्यति जनार्दनः ॥ १२
भवत्प्रतीक्षः कृष्णोऽसौ धर्मराज महाद्युते ।
यदत्रानन्तरं कृत्यं तद्भवान्कर्तुमर्हति ॥ १३

युधिष्ठिर उवाच ।

युज्यतां मे रथवरः फल्गुनाप्रतिमद्युते ।
न सैनिकैश्च यातव्यं यास्यामो वयमेव हि ॥ १४

---

Da पानि (for पाणि) D6 -स्वनकाश्, D7 T G स्वनिनो, M3 स्वनिता (for स्वनिकास्) Ca cites पाणि स्वनिकास् (as in text) K6 पठति पाठका स्वस्ति, Cv पठति पाणिका गाथा —$^{b}$) V1 तत्र, D7 G1 3 4 गाथा, T G2 M2 4 गाथा (for तथा) Ś1 K1 गायणा, K2-4 B1 Dn2 D6 7 S (except T2 G2 M2) गायका (for गायना) —$^{c}$) K2 शकानक-, K3 V1 B Dn D2 3 5 6 शखानथ (for °नक). K1 D3 T1 G1 4 M1, 3 4 -मृदगाश्च D1 शखानवात्रवगाश्च —$^{d}$) K1 (by corr) 3 5 Da D1, 4, 7 S (except T2 G3) प्रावा द्यंत; V1 B Dn D2 3, 5, 6 प्रवाद्यति (for °द्यन्त).

5 $^{a}$) D3 -वर्णिनी (for -वेणूना). B1 शखानां च मृदंगानां —$^{b}$) G1 स्वराश् (for स्वनश्) K3 D2-7 S चापि (for चाति-) K2 -मनोहर, G1 मनोरमा V1 ससतिश्च मनोरम (s10) —$^{c}$) Dn D4 सहास, D7 T1 G2-4 प्रभास, D3 आहार, M2 प्रभाव (for प्रहास) D4 इति (for इव) Cv as in text. —$^{d}$) K2 4 शुशुभे, B1 शुश्राव, D3 सुश्रुव, M2 4 श्रूयते (for शुश्रुवे) D7 तव (for तस्य) K1 (by corr) 3 4 D7 T1 G1 3 4 वेश्मनि (for °न)

6 $^{a}$) V1 B Da Dn D2 3 5 6 ततो (for तथा) —$^{b}$) K5 D4 T G M4 मगळ(K5 D4 G1 M4 °ल) संयुता; D7 मगलसनिभा (for °सहिता) —$^{c}$) Ś1 Da1 उच्चैरुर्; D3 उच्चैदुर, M3 निश्चेरुर् —$^{d}$) K2 B1 5 Dn1 D2 4 5 -निःस्वना, V1 B6-3 Da1 Dn2 D6 निस्वना (D6 °नै), D7 T2 संयुता, T1 G -बृहिता, M1, 3 सस्थिता, M2 4 -मिश्रिता (for संहिता)

7 $^{b}$) M1 3 स्नात्वा (for स्नात). B6 3-5 D2 3 5 6 सम्रत (for अच्युत) —$^{c}$) B1 5 D2-6 जप्य; D1 lacuna, Ca गुह्य (as in text) D3 महावाहो

8 $^{b}$) K3 T2 M तदा (for तथा) —$^{c}$) B1 D3 G3 गवां (D3 गाव) सहस्रमे(B1 °स्र चै)कैक —$^{d}$) Ś1 K1 4 D1 तोपयामास, D3 वार (for वाच) K3 भारत, T2 केशव (for माधव)

9 $^{a}$) B2-4 Da1 D4 M1 3 4 -लभन, D1 लघन —$^{b}$) Ś1 K1 D1 M1-3 [अ]धात्मानम्, K2 4 D3 चात्मा (for आत्मा) K3 5 D4 तथात्मान विलोक्य च —$^{d}$) D3 तत सात्यकिमंघवत् (s10)

10 $^{c}$) K1 महाराजा (for °तेजा) —$^{d}$) Da1 प्रष्टु (for द्रष्टु) K1 महेश्वर, B1 D1 T1 युधिष्ठिर

11 $^{c}$) G3 उपागम्य —$^{d}$) V1 B D (except D1 4 8) S अभाषत (for उवाच ह)

12 $^{a}$) D3 राजा (for राजन्) —$^{d}$) D7 T3 निर्गच्छति, D3 पिपासति (for प्रयास्यति)

13 $^{a}$) D2 3 5 6 तव (for भवत्) V1 भवत्प्रतीक्षक कृष्णो, D3 भवत्प्रतीक्ष्यस्तूर्णं वै —$^{b}$) Da महाद्युति —K4 om 13$^{cd}$ —$^{c}$) V1 B2 Da D7 T1 G (except G2) कार्यं; B1 कृत्ये, D5 कृत्वा, T2 तत्त्वं (for कृत्य) —$^{d}$) B1 Da T2 G1 2 वक्तुम् (for कर्तुम्) K5 B1 Dn2 D1 5 G1 (before corr) अर्हसि (for °ति) — After 13, V1 (marg) B3-5 D (except D1 4 8) ins

न च पीडयितव्यो मे भीष्मो धर्मभृतां वरः ।
अतः पुरःसराश्चापि निवर्तन्तु धनंजय ॥ १५
अद्य प्रभृति गाङ्गेयः परं गुह्यं प्रवक्ष्यति ।
ततो नेच्छामि कौन्तेय पृथग्जनसमागमम् ॥ १६

वैशंपायन उवाच ।

तद्वाक्यमाकर्ण्य तथा कुन्तीपुत्रो धनंजयः ।
युक्तं रथवरं तस्मा आचचक्षे नरर्षभ ॥ १७
ततो युधिष्ठिरो राजा यमौ भीमार्जुनावपि ।
भूतानीव समस्तानि ययुः कृष्णनिवेशनम् ॥ १८
आगच्छत्स्वथ कृष्णोऽपि पाण्डवेषु महात्मसु ।
शैनेयसहितो धीमान्रथमेवान्वपद्यत ॥ १९
रथस्थाः संविदं कृत्वा सुखां पृष्ट्वा च शर्वरीम् ।
मेघघोषै रथवरैः प्रययुस्ते महारथाः ॥ २०
मेघपुष्पं बलाहं च सैन्यं सुग्रीवमेव च ।
दारुकश्चोदयामास वासुदेवस्य वाजिनः ॥ २१
ते हया वासुदेवस्य दारुकेण प्रचोदिताः ।
गां खुराग्रैस्तथा राजँल्लिखन्तः प्रययुस्तदा ॥ २२
ते ग्रसन्त इवाकाशं वेगवन्तो महाबलाः ।
क्षेत्रं धर्मस्य कृत्स्नस्य कुरुक्षेत्रमवातरन् ॥ २३
ततो ययुर्यत्र भीष्मः शरतल्पगतः प्रभुः ।

---

119* एवमुक्त्वा प्रत्युवाच धर्मराजो युधिष्ठिरः ।
[Dn धर्मपुत्रो (for °राजो).]

14 Bo 2.4 D2 om. the ref. — b) Ś1 K2 फाल्गुन, some MSS फाल्गुन. K3 श्रुति (for श्रुते). — c) Ś1 K (except K2) D1.4 प्रयातस्य, D* च यास्यामो, M1 च गन्तव्यं (for च या°). D2 यद्यप्यनंतरं कृत्य (~13c). — d) M1.2 हृ (for हि).

15 a) K2 Dn2 D2 T G अत , B1 नत (for अत). B1 पुरस्सरान्, T1 G पुरस्सरान्. Ś1 K1.2 D1.4 चैव (for चापि). — d) Ś1 K1.2.4 D1 निवर्तता (D1 °ते) (for निवर्तन्तु). G1 धनजय.

16 b) K1 परो. Da1 D1 प्रवक्षति. D3 परत्रमो प्रवक्ष्यति. — c) K2.4 Bo 2-. D2.3.4.6 अतो (for ततो). V1 गाङ्गेय (for कौन्तेय). D2 यतो नेच्छामि कौरव्य. — d) Cs cites पृथग्जन. G1 M1 °समागमं (M1 °म) (for °गमम्). B1 पृथग्जनसमागमान्.

17 D* M1 om. the ref. — a) K2 D1.2 S मानाय. D2 आदाय (for आकर्ण्य). K2.3 D1.4.5 M तदा, D1 T G तत (for तथा). K1 V1 B Da Dn D 2.3.5 स तद्वाक्यमथादाय. — b) B युधिष्ठिर (for धनंजय). — c) M1 युक्त. D1 तस्मात् (for तस्मा). — d) Dn1 आचष्टे च (for आचचक्षे). N (except V1 Bo-3 Dn1) T G1.4 नरर्षभ (for °र्षभ).

18 D1 om. 18c–19a. — c) D2 (erroneously) भर्तुः (for भूतानि). K4 Dn1 (before corr.) D1.2 च (for [इव]). — d) D2 ययौ (for ययुः).

19 D1 om. 19 (cf. v.l. 18). — a) Da1 D1 अगच्छत्सु, M1 भागत्य (for °त्स्व). T1 सह (for अथ). — c) K4 धीमत्. — d) M1 रथमप्रपद्यत (sic).

20 a) Ś1 Da1 Dn1 D1 रथस्थौ (Da1 °स्था; Dn2 °स्थात्), P1 G1 रथस्थ (G1 °स्थ) (for °स्थाः). D1 संविदं; Cs संविद् (as in text). — b) K1.4 D1 S सुखं (for सुखां). Ś1 पृष्ट्वा, K3 सुखां तु. Da1 T* दृष्ट्वा च, Dn* कृत्वा च (for पृष्ट्वा च). D1.3 शर्वरी (for °रीम्). — c) D1 रथस्था, D1 °घरै (for °वरै). — d) V1 B Da Dn D1.4.5 नरर्षभा (for महारथा).

21 a) K4 V1 B Da Dn D2.4.6 [illegible] — b) K2.4 V1 सैन्य. K1 L Da Dn D1.2 सैन्य (for सैन्य). — d) D1 वासुदेवस्य (for °देवस्य).

22 b) Ś1 K (except K1) D2.4 [illegible] (D1 [illegible]) दारुकेण (for °केण). — c) K2.3 V1 Bo Da Dn (Dn by corr.) D* T1 G1.2.4 M1.4 तदा, D1 ततो (for तथा). D1 [illegible]. Cs cites [illegible] (as in text). — d) K2 प्रययुस्ते, K1 °प्रययु, B1 D °युस्तदा (for °युस्तदा).

23 b) K4 D2.4 महाबला. — c) D1 धर्मस्य, D2 क्षेत्र; D2 क्षेत्र, G1 [illegible]. D1 D2 G1 M1 कृत्स्नस्य; D1 [illegible]. — d) M1 समवातरन्. D1.3 [illegible].

24 a) K [illegible] V1 B Da Dn D1.4 [illegible]. D* [illegible]. — b) Da1 D1 [illegible]

C 12 1920
B 12 53 25
K 12 52 24

आस्ते ब्रह्मर्षिभिः सार्धं ब्रह्मा देवगणैर्यथा ॥ २४
ततोऽवतीर्य गोविन्दो रथात्स च युधिष्ठिरः ।
भीमो गाण्डीवधन्वा च यमौ सात्यकिरेव च ।
ऋषीनभ्यर्चयामासुः करानुद्यम्य दक्षिणान् ॥ २५
स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः ।
अभ्याजगाम गाङ्गेयं ब्रह्माणमिव वासवः ॥ २६
शरतल्पे शयानं तमादित्यं पतितं यथा ।
ददर्श स महाबाहुर्भयादागतसाध्वसः ॥ २७

इति श्रीमहाभारते शान्तिपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

## ५४

जनमेजय उवाच ।
धर्मात्मनि महासत्त्वे सत्यसंधे जितात्मनि ।
देवव्रते महाभागे शरतल्पगतेऽच्युते ॥ १
शयाने वीरशयने भीष्मे शंतनुनन्दने ।
गाङ्गेये पुरुषव्याघ्रे पाण्डवैः पर्युपस्थिते ॥ २
काः कथाः समवर्तन्त तस्मिन्वीरसमागमे ।
हतेषु सर्वसैन्येषु तन्मे शंस महामुने ॥ ३
वैशंपायन उवाच ।
शरतल्पगते भीष्मे कौरवाणां धुरंधरे ।
आजग्मुरृषयः सिद्धा नारदप्रमुखा नृप ॥ ४

---

देव°) D1 M2 इव (for यथा)

25 [b]) D8 तथा (for रथात्) Ś1 K1 तु (for च) —[c]) D2 8 भीष्मो (for भीमो) K3 D4 गाजीव (for गाण्डीव) —[d]) Da सात्यकिम्. —[e]) D7 S ऋषीनभ्यर्च(D7 M1 °र्च्य)यंति स्म (D7 °त्यस्मान्) —[f]) K2 दक्षिण

26 [a]) K8 राजन् (for राजा). —[b]) G1 क्षेत्रै रिव च चद्रमा —[c]) D7 अथाजगाम (for अभ्या°)

27 [a]) Ś1 K4 Da G1 M4 शरतल्प, D8 °तल्पै (for °तल्पे) —[b]) B1 तदा, D1 तथा (for यथा) —[c]) K° 5 V1 B2 Da Dn D1 8 transp ददर्श and स B1 सु (for स). K2 8 5 Dn महाबाहु (for °बाहुर्) —[d]) K2 V1 B (except B1) Da Dn D8 5 6 चागत, D2 स्वागत- (for आगत-)

Colophon —*Sub parvan*, Ś1 K V1 B Da Dn D1–6 T2 G2 M राजधर्म —*Adhy name* B Dn1 D2 8 5 7 T1 G1 8 4 भीष्माभिगमनं, G2 भीष्मसमीपे कृष्णादिप्रवेशः, M3 द्वितीयदिवसागमन —*Adhy. no* (figures, words or both) K5 Da1 Dn D7 S 53 (as in text), B1. 4 52, D2 8 51 —*Śloka no* Dn 28

### 54

1 D8 om. the ref. —[a]) B0 5 महात्मनि (for धर्मा°). K4 lacuna, V1 B Da Dn D2 3 5 6 वीर्ये (for सत्त्वे) —[b]) B0 4 5 महात्मत्वे (for सत्यसंधे). —[c]) M1 8 देवव्रतो (for °व्रते) D5 समाभागे (for महा°) —[d]) B1 °गतेषुते, Da2 D3 °गतेच्युत (Da2 °त), D7 T G M2 4 °गते प्रभौ (D1 °भु, M2 4 °भो) (for °गतेऽच्युते) Da1 शरतल्पे गते च्युत.

2 [b]) K4 V1 B Dn D2 8 5 6 शांतनु (for शंतनु) —[c]) D1 गांगेय M2 -व्याघ्रै (for -व्याघ्रे) —[d]) V1 समुपस्थिते; Dn D7 T1 G पर्युपासि(D7 G3 °स)ते, D4 T2 M3 पर्यवस्थिते; D5 प्रत्युपस्थिते (for पर्युपस्थिते)

3 [a]) D8 कथाः समभवत्तत्र —[b]) Ś1 K1 D1 -समाकुले (for -समागमे) —D8 om 3[cd] —[c]) D7 T2 गतेषु (for हतेषु) G1–3 तेषु (for सर्व-) —[d]) D7 T G1–3 M1 8 transp तन्मे and शंस K2 4 महामते (for °मुने). M2 4 तन्मे ब्रूहि द्विजोत्तम.

4 D8 om. the ref —[a]) Da1 D4 शरतल्पे (D4 °ल्पा) (for °तल्प-) D8 हते (for -गते) K4 वीरे (for भीष्मे) —[b]) K1 4 D1 कौरवाना. D1. 3 S पितामहे (D8 °हा, G1 °ह) (for धुरंधरे) K8. 5 D4 भारतानां पितामहे —[c]) G1 आजग्मू K5 B0 D4 T2 सर्वे (for सिद्धा)

हतशिष्टाश्च राजानो युधिष्ठिरपुरोगमाः ।
धृतराष्ट्रश्च कृष्णश्च भीमार्जुनयमास्तथा ॥ ५
तेऽभिगम्य महात्मानो भरतानां पितामहम् ।
अन्वशोचन्त गाङ्गेयमादित्यं पतितं यथा ॥ ६
मुहूर्तमिव च ध्यात्वा नारदो देवदर्शनः ।
उवाच पाण्डवान्सर्वान्हतशिष्टांश्च पार्थिवान् ॥ ७
प्राप्तकालं च आचक्षे भीष्मोऽयमनुयुज्यताम् ।
अस्तमेति हि गाङ्गेयो भानुमानिव भारत ॥ ८
अयं प्राणानुत्सिसृक्षुस्तं सर्वेऽभ्येत्य पृच्छत ।
कृत्स्नान्हि विविधान्धर्मांश्चातुर्वर्ण्यस्य वेत्त्ययम् ॥ ९
एष वृद्धः पुरा लोकान्संप्राप्नोति तनुत्यजाम् ।
तं शीघ्रमनुयुञ्जध्वं संशयान्मनसि स्थितान् ॥ १०
एवमुक्ता नारदेन भीष्ममीयुर्नराधिपाः ।
प्रष्टुं चाशक्नुवन्तस्ते वीक्षांचक्रुः परस्परम् ॥ ११
अथोवाच हृषीकेशं पाण्डुपुत्रो युधिष्ठिरः ।
नान्यस्त्वद्देवकीपुत्र शक्तः प्रष्टुं पितामहम् ॥ १२
प्रव्याहरय दुर्धर्ष त्वमग्रे मधुसूदन ।
त्वं हि नस्तात सर्वेषां सर्वधर्मविदुत्तमः ॥ १३
एवमुक्तः पाण्डवेन भगवान्केशवस्तदा ।
अभिगम्य दुराधर्षं प्रव्याहारयदच्युतः ॥ १४

C. 12. 1958
B. 12. 54. 14
K. 12. 53. 14

5 D1 repeats 5cd after 6 — d) K5 D3 -यमौ (for -यमास्). D3 अपि (for तथा)

6 a) D3 तेपि (for तेऽभि) D1 7 S महात्मान (for °त्मानो) — b) K3 4 D7 5 T2 G1-3 M1-3 भारताना (for भर°) Da1 D1 पितामह (D1 °ह) — c) Dn D3 8 अनुशोचत, D3 अन्वशोचत — d) G3 रमत (for पतित) — After 6, D1 repeats 5cd

7 a) B1 M2 अपि, M1 अथ (for इव) Ś1 K1.4 D1 तु (D1 स) ध्यात्वा, D3 पुन्य कृत्वा (hypermetric) (for च ध्यात्वा) D1 मुहूर्तमिवेनुध्यात्वा — b) G3 देवदर्शिन (for °दर्शन) — d) K8 स्वपार्थिवान् (for च पा°)

8 a) Ś1 D1 यदाचक्षे (D1 °ष्टे), K1 D3 य (D8 च) आचष्टे; K5 B1 Dn D2 3 5 6 समाचक्षे, V1 Bo 2-5 Da समाचष्टे (for च आचक्षे) D7 T2 आचचक्षे प्राप्तकाल, T1 G M आचक्षे (G1.2 °ष्टे) प्राप्तकाल च (M4 वो). — b) D4 अनुपृच्छता, Ca °युज्यताम् (as in text) — c) T2 अतम् (for अस्तम्) K4 D7 T G च (for हि)

9 b) K2 3 5 V1 B Da Dn D2 3 5 6 8 सर्वेभ्य (K4 °वें स्व) तु, D1 समभ्येत्य (for सर्वेऽभ्येत्य) Ś1 पृच्छता D7 S तं (T2 M2 4 तत्) सर्वमनुपृच्छत (M2 °ता) — D3 om 9cd — d) K8 Dn2 चातुर्वर्णस्य, Da1 °वर्णाश्च, Ca °वर्ण्यस्य (as in text) T2 वेत्त्यसौ (for वेत्त्ययम्) B1 चातुर्वर्णान्सत्यय (sic)

10 a) K4 5 V1 B D (except D4 8) T1 G M2 परान् (for पुरा) — b) D4 अत्राप्नोति, T2 सम्प्रयाति, M2 4 प्राप्नोतीति (M4 °ति हि) (for संप्राप्नोति) K8 D8 तनुत्यज; K4 D1 °त्यजन्, K5 B (except B2) Dn D2 3 5 6 तनु त्यजन्, G3 तनु त्यजा; M सुदुर्लभान् (for तनुत्यजाम्) — c) D7 T1 G तत्क्षिप्रम्, T2 तत्सर्वम्, M (except M2) तच्छीघ्रम् K1 अनुपृच्छध्व, K2 5 B2 Dn M1 3 4 °युञ्जीध्व (for °युञ्जध्व)

11 Before 11, K1 5 V1 B2 D4 ins वैशंपायन उवाच — a) Ś1 M1.3 उक्त्वा, K8 D8 उक्तो (for उक्ता) — b) Ś1 M1 एयुर्, K8 Da आयुर्; D4 आशु (for ईयुर्) D8 भीमार्जुननराधिपा — c) K4 D1 T2 ना (D4 वा, T2 न) शक्नुवतस् (for चाशक्नु°) B1 प्रष्टु त चाशक्नवत

12 a) B1.5 D2 8 6 तथा; B4 अतो; Dn1 ततो (for अथ) — b) D7 T1 G (except G2) M1 8 धर्मपुत्रो (M1.8 °राजो) (for पाण्डु) — c) Ś1 K1 D1 स्व (for त्वद्) K2 4 5 V1 B D (except D4 7) M1 नान्यस्तु (K4 °न्यस्त, B1 °न्यन्यै, D4 °न्यस्त्व; M4 °न्यत्र) देवकीपुत्रात्

13 a) K1 2 4 V1 B Da Dn D2 3 5 6 T1 G प्रव्या (K4 B4 Dn1.2 [before corr] D2 8 प्रत्या-, B1 अव्या) हर यदुश्रेष्ठ (D6 °ष्ठं), K3 5 D4 प्रत्याहर सु (K5 स्व) दुर्धर्ष (K5 °र्षं); D1 अव्याहारय दुर्धर्ष, D7 T2 प्रव्याहराशु दुर्धर्ष, D8 प्रत्याहारय दुर्धर्ष; M1.8 व्याहारय सुदुर्धर्ष, M2.4 प्रव्याहारय दुर्धर्षं (M2 °र्ष) — c) M1 3 न स्व (for स्व हि).

14 b) D4 8 भगवन् K8 D4 तथा (for तदा) K1 D1 भगवान्मधुसूदन — d) Da1 T1 G1 प्रत्या (Da1 °व्या) हरयद्, D7 8 G3 4 प्रत्याहा°, M1 8 ,

C 12 1939
B 12 24 15
K 12 53 15

वासुदेव उवाच ।

कच्चित्सुखेन रजनी व्युष्टा ते राजसत्तम ।
विस्पष्टलक्षणा बुद्धिः कच्चिच्चोपस्थिता तव ॥ १५
कच्चिज्ज्ञानानि सर्वाणि प्रतिभान्ति च तेऽनघ ।
न ग्लायते च हृदयं न च ते व्याकुलं मनः ॥ १६

भीष्म उवाच ।

दाहो मोहः श्रमश्चैव क्लमो ग्लानिस्तथा रुजा ।
तव प्रसादाद्गोविन्द सद्यो व्यपगतानघ ॥ १७
यच्च भूतं भविष्यच्च भवच्च परमद्युते ।
तत्सर्वमनुपश्यामि पाणौ फलमिवाहितम् ॥ १८
वेदोक्ताश्चैव ये धर्मा वेदान्तनिहिताश्च ये ।
तान्सर्वान्संप्रपश्यामि वरदानात्तवाच्युत ॥ १९
शिष्टैश्च धर्मो यः प्रोक्तः स च मे हृदि वर्तते ।
देशजातिकुलानां च धर्मज्ञोऽस्मि जनार्दन ॥ २०
चतुर्ष्वाश्रमधर्मेषु योऽर्थः स च हृदि स्थितः ।
राजधर्मांश्च सकलानवगच्छामि केशव ॥ २१
यत्र यत्र च वक्तव्यं तद्वक्ष्यामि जनार्दन ।
तव प्रसादाद्धि शुभा मनो मे बुद्धिराविशत् ॥ २२
युवेव चास्मि संवृत्तस्त्वदनुध्यानबृंहितः ।
वक्तुं श्रेयः समर्थोऽस्मि त्वत्प्रसादाज्जनार्दन ॥ २३

---

K5 अच्युत. K1 प्रत्याहरदथाच्युत..

15 K2-4 D4 8 om the ref. Ś1 K1 D1 T2 G2 भगवान्; K5 T1 G1, 3 4 श्रीकृष्ण (for वासुदेव) — $^{a}$) K4 D1 कश्चित्, D8 कचित् (for कच्चित्) B1 यशसा (for रजनी) — $^{b}$) D2 3 5 क्रांता, Ca व्युष्टा (as in text) B1 राजसे राजसत्तम. — $^{c}$) T2 विसृष्ट (for विस्पष्ट-). — $^{d}$) K4 D1 कश्चिच् (for कच्चिच्) D8 G1 (before corr.) इव (for तव). D4 कच्चिस्वोपस्थिता तव (sic)

16 $^{a}$) D1 कश्चिज्. — $^{b}$) K1 D1 तव; M1 3 च ये (for च ते). K6 प्रतिभासंति तेनघ Ca cites प्रतिभान्ति (as in text) — $^{c}$) D8 कंपते (for ग्लायते). B3 4 D2 3 5 6 ते (for च). — $^{d}$) Ś1 K1 D1 महत् (for मन).

17 D8 om. the ref — $^{a}$) V1 न मे (for दाहो). — $^{b}$) K1 रुण; V1 B1 2 Da रुज, M2 रुजा — $^{c}$) K3 5 V1 B1, 2 Da Dn D4 7, 8 S वार्ष्णेय (for गोविन्द) — $^{d}$) K1 D1 -गता (D1 °तो) मम; K2 3, 5 D4 7 8 S -गतानि मे (for -गतानघ) K4 V1 B Da Dn D2 3 5, 6 सद्य प्रतिगतानि (B1 °श्च) मे. Ca cites प्रतिगतानि.

18 $^{a}$) K4 D1 यश्च (for यच्च). D7 नून (for भूत). K1 B6 भविष्यं च; K4 D1 °ष्यश्च — $^{b}$) K4 भवश्च. D2 3 5 6 M2 परमच्युत (for °द्युते) K1 भवच्च भरतर्षभ; D1 भवश्च पुरुषोत्तम. — B1 D5 om (hapl) $18^{c}$–$19^{d}$. — $^{c}$) D8 तत. सर्वमनु पश्चा (sic) — K6 om (hapl) $18^{d}$–$19^{c}$. — $^{d}$) V1 B (B1 om) Da Dn D2 3 6 इवार्पितं; D8 °हिते (for °हितम्) T2 पाणावामलकं यथा (= Ram 1 3 $6^{a}$)

19 B1 D5 om 19, K6 om. $19^{abc}$ (for all, cf. v 1 18) — $^{b}$) K2 4 D7 8 S वेदांतनियता (T2 °रता, G3 M2 °चया) श्च, K3 D4 वेदांतानियमाश्च, V1 B (B1 om) Da Dn D2 3 6 वेदाताधिगताश्च, D1 वेदात विहिताश्च (for °निहिताश्च) Ca cites वेदान्तविहिता. — $^{c}$) Ś1 K1 4 सम्प्रवक्ष्यामि (for °पश्यामि)

20 $^{b}$) T1 G1 3 transp च and मे Ś1 स च सर्वो हृदि स्थित — Ś1 reads $20^{cd}$ on marg *sec m.* — $^{c}$) K3 -ज्ञाति (for -जाति) T2 -कुलाचारा (for -कुलानां च) — $^{d}$) T2 ये तज्ज्ञो (sic) (for धर्मज्ञो). B6 जनार्दन

21 D7 om (hapl) $21^{a}$–$22^{b}$ — $^{a}$) K1 m 4, 5 Da Dn2 D2 3 चतुर्था (K1 m °र्धा, Da °रा, D2 °ष्टा) श्रमधर्मेषु — $^{b}$) B4 स हृदि मे (for स च हृदि) — After 21, D1 ins ·

120* सर्वधर्मेषु यो ह्यर्थः स च मे हृदि संस्थितः ।

22 D7 om $22^{ab}$ (cf v 1 21). — $^{a}$) B Dn D2 3 5 6 8 यच्च; D4 lacuna (for the first यत्र) — After $22^{ab}$, K2 4 read 24 — $^{c}$) M4 शुभ — $^{d}$) K4 B1 बुद्धिम्

23 $^{a}$) D7 युद्धेव, D8 युद्धेन, T1 G स्व (G1 स्वा) मेव (for युवेव) V1 B Da Dn D2 3 5 6 M2 4 युवे- (V1 पुरे-, B1 पुरै) वास्मि समावृत्तस्, D1 युद्धे चास्मि समावृत्ते — $^{b}$) T2 तवानु- (for त्वदनु) K2 4 -सहित; V1 -सभृत, Ca -बृंहित (as in text) — K1 om $23^{c}$–$24^{d}$ — $^{c}$) Da1 [ऽ]स्मि (for ऽस्मि)

24 K1 om. 24 (cf. v. 1 23) K2, 4 read 24 after $22^{ab}$ — $^{a}$) V1 D1 4 भगवान्; B6 तु भगवान्

स्वयं किमर्थं तु भवाञ्श्रेयो न प्राह पाण्डवम् ।
किं ते विवक्षितं चात्र तदाशु वद माधव ॥ २४

वासुदेव उवाच ।

यशसः श्रेयसश्चैव मूलं मां विद्धि कौरव ।
मत्तः सर्वेऽभिनिर्वृत्ता भावाः सदसदात्मकाः ॥ २५
शीतांशुश्चन्द्र इत्युक्ते को लोके विस्मयिष्यति ।
तथैव यशसा पूर्णे मयि को विस्मयिष्यति ॥ २६
आधेयं तु मया भूयो यशस्तव महाद्युते ।
ततो मे विपुला बुद्धिस्त्वयि भीष्म समाहिता ॥ २७
यावद्धि पृथिवीपाल पृथिवी स्थास्यते ध्रुवा ।
तावत्तवाक्षया कीर्तिर्लोकाननु चरिष्यति ॥ २८
यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते ।
वेदप्रवादा इव ते स्थास्यन्ति वसुधातले ॥ २९
यश्चैतेन प्रमाणेन योक्ष्यत्यात्मानमात्मना ।
स फलं सर्वपुण्यानां प्रेत्य चानुभविष्यति ॥ ३०
एतस्मात्कारणाद्भीष्म मतिर्दिव्या मया हि ते ।
दत्ता यशो विप्रथेत कथं भूयस्तवेति ह ॥ ३१
यावद्धि प्रथते लोके पुरुषस्य यशो भुवि ।
तावत्तस्याक्षयं स्थानं भवतीति विनिश्चितम् ॥ ३२
राजानो हतशिष्टास्त्वा राजन्नभित आसते ।

C. 12. 1937
B. 12. 54. 33
K. 12. 53. 33

---

(hypermetric), M2. 4 नु भवान् (for तु भ°). — b) K4 D7 T G M2 पादवान्, Da1 D5 M1. 3. 4 पाडवे (Da1 D5 °व) (for °वम्) — d) D4 तथाशु

25 D8 om. the ref, K1m T2 G3 श्रीभगवान् (for वासुदेव) — b) Ś1 मा (for मां) — c) D1 सत्ते, D2 lacuna (for मत्त°) K1 D1 [ऽ]भिनिवृत्ता; D7 निवृत्ता हि, T G1. 2. 4 M1-3 हि निर्वृत्ता (for ऽभिनि°) — d) G1. 2 °सदात्मिका

26 a) T2 शीत (for चन्द्र) — b) K4 D7 को लोको, V1 B Da Dn D2. 2. 5. 8 लोके को (by transp), T1 G तेन को — D4. 7 om. (hapl.) 26[cd] — c) K1 D1 M यशस (for °सा) M1 पूर्णो (for पूर्णे)

27 a) K4 आधीयं; G3 प्रधेय; M3. 4 आवेद्य (for आधेयं) Da हि (for तु) Bo D2 महा, D7 T2 महद्, M4 यशो (for मया) — b) M3 मया (for यशस्) K3 D4 त्वयि (for तव) Da महामते (for °द्युते) — c) D7 T G अतो (for ततो) K1 (by corr) 2 M1. 3. 4 मे विमला, D8 [ऽ]तिविपुला (for मे वि°) — d) G1 भीम (for भीष्म) V1 B Da Dn D2. 3. 5. 6 समर्पिता (for समाहिता)

28 a) Bo या बुद्धि (for यावद्धि) — b) K3. 5 V1 B Da Dn D2-6. 8 M1. 2. 4 पृथ्वीयं (K3 Bo D4 पृथ्वी म) (for पृथिवी) K1 D1 स्थीयते, K5 B (except B1) Dn1 D2. 3. 5-3 S स्थास्यति (for °ते) Da1 D2. 2. 5. 6 ध्रुव (for ध्रुवा) — c) D1 तु वा (for तव) K1. 4 D1. 6. 8 कीर्ति (for कीर्तिर्) Cv ताव त्तस्याक्षया कीर्तिर् — d) K1 अनुद्धरिष्यति (for अनु च°)

29 D1 om. (hapl.) 29-30 — a) K1 यश्च, K5 D4 M याश्च (for यच्च) G3 त्वा (for त्व) K4 D4 वक्षसे, Da1 प्रक्ष्यसे, D7 वक्ष्यते, G1 रक्ष्यसे — b) Ś1 K1 [अ]नुवक्ष्यते, D7 तु पृच्छते (for [अ]नुपृ°) M2 पाडवेयस्य पृच्छत — c) K1. 4 B (except B1) Dn D2. 3. 5. 6 वेदप्रवाद (for °प्रवादा) Ca cites वेद प्रवादा इव (as in text) — d) K1 स्थास्यति, B (except B1) Dn D2. 3. 5. 6 °स्यते (for °स्यन्ति) K5 Bo 1. 4. 5 D2 3. 5-7 T1 G (except G2) पृथिवीतले, D8 वसुधाधिप (for °तले)

30 D1 om 30 (cf v 1 29). — a) K1 B1 यश्च (B1 °च्च) तेन, Dn2 तथैतेन; M2 यश्चैनेन (for यश्चैतेन) — b) K3 D4 G3 आत्मनि (G3 °न) (for °ना) — c) G2 सर्ववर्णानां (for °पुण्यानां) — d) Ś1 वा (for च)

31 a) M3. 4 तात (for भीष्म) — b) Ś1 T2 M1 समाहिता (Ś1 °ते), K3. 4 D7 मयाहिता, G1 महीयते (for मया हि ते) — c) K3. 4 यथा (for दत्ता) K1 om. यशो K5 V1 B (except Bo) Dn D2. 3. 5. 6 विप्रथयेत्, D1 °येतं, T2 °थित; G1 विवर्धये (for विप्रथेत) — d) D7 S (except M2. 4) इति प्रभो (for तवेति ह)

32 a) Bo या बुद्धि (for यावद्धि) Da प्रथमे; Dn2 (before corr) प्रथिते, G1 प्रथते (for प्रथते) — c) K V1 B D S तावत्तस्याक्षया कीर्तिर् (K3 D4 M1. 3. 4 लोका) — d) K3 M1. 3 भवतीति, K5 M4 भविष्य(M4 °ष्य)ति, D4 भविष्यतीति (hypermetric) (for भवतीति). K1. 3 Dn विनिश्चिता, M1-3 °श्चय (M2 °या), M4 [इ]ति निश्चय (for विनिश्चितम्).

C 12 1957
B 12 54 33
K 12 53 33

धर्माननुयुयुक्षन्तस्तेभ्यः प्रब्रूहि भारत ॥ ३३
भवान्हि वयसा वृद्धः श्रुताचारसमन्वितः ।
कुशलो राजधर्माणां पूर्वेषामपराश्च ये ॥ ३४
जन्मप्रभृति ते कश्चिद्वृजिनं न ददर्श ह ।
ज्ञातारमनुधर्माणां त्वां विदुः सर्वपार्थिवाः ॥ ३५
तेभ्यः पितेव पुत्रेभ्यो राजन्ब्रूहि परं नयम् ।
ऋषयश्च हि देवाश्च त्वया नित्यमुपासिताः ॥ ३६
तस्माद्वक्तव्यमेवेह त्वया पश्याम्यशेषतः ।
धर्माञ्शुश्रूषमाणेभ्यः पृष्टेन च सता पुनः ॥ ३७
वक्तव्यं विदुषा चेति धर्ममाहुर्मनीषिणः ।
अप्रतिब्रुवतः कष्टो दोषो हि भवति प्रभो ॥ ३८
तस्मात्पुत्रैश्च पौत्रैश्च धर्मान्पृष्टः सनातनान् ।
विद्वाञ्जिज्ञासमानैस्त्वं प्रब्रूहि भरतर्षभ ॥ ३९

इति श्रीमहाभारते शान्तिपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

33 $^{a}$) Da ये; T2 च; M2-4 त्वा (for त्वां) —$^{b}$) B2 नियतम्; D4 अमित (for अमित) V1 Da राजश्रियतमासने (V1 °ते). —$^{c}$) K1 अनुनयुंक्षंतस्; K6 अनुयुयुस्वक्त°; B1 अनुप्रयुक्षंतस् (for °युयुक्षन्तस्). Ca cites अन्व(v l नु)युयुक्षन्त. D7 T1 G स्वधर्मान नुयुंक्षंतस्. —$^{d}$) K6 सर्व (for तेभ्य°). K1 भारतीं

34 $^{a}$) V1 भगवान् (for भवान्हि). G2 वयो (sub metrio) (for वयसा) —$^{b}$) D1 M2 श्रुत्वाचार (for श्रुताचार). D8 समाहित (for °समन्वितः). —$^{c}$) K4 राजधर्माणो, Bo °शार्दूल (for °धर्माणां) —$^{d}$) K4 6 V1 B2 Da Dn D2 8 सर्वेषाम् (for पूर्वेषाम्) K1 अपरश्च; K3 4 D4 अवराश्च, D7 T G अपरे (for अपराश्च)

35 $^{a}$) K3 Bo Da D4, 7 S (except T2 M4) ते (K3 D4 य, Bo Da तत्) किंचिद् (for ते कश्चिद्) —$^{b}$) D8 च (for न) K3 हि (for ह) —$^{c}$) Da2 स्थावर; Ca स्यातार (for ज्ञातारम्) Ś1 K1 D1 S मनुधर्माणां; K2-6 V1 Bo 1 4, 6 Dn D2-6 सर्व धर्माणा, B2 Da सर्वविधाना; B3 सर्वभूतानां; D8 उत धर्माणां (for अनुधर्माणां as in D7 only). —$^{d}$) K1 विदुस्त्वां (by transp), D6 M4 य (M4 त्वा) विदु T2 भुवि (for सर्वे)

36 $^{b}$) D1 राजा (for राजन्). K3 5 Da D4 6 7 S परंतप (G1 °प), D8 पर श्रय (for पर नयम्) —$^{c}$) Ś1 K (except K5) Dn D1 चैव, B (except B2) D2 3, 5 6 चापि (for च हि) Da2 वेदाश्च (for देवाश्च). —$^{d}$) Da2 उपाश्रिता. (for °सिता°).

37 $^{a}$) D3 अकृत्यम् (for वक्तव्यम्). Ś1 K1 D1 एवेति; K3 B2 Da Dn D2 एवेद, D4 एवाह, D6 एवेह (for एवेह). —$^{b}$) K3 V1 B Da Dn D2 3 5 6 [अ]वश्यम् (for पश्यामि) —$^{c}$) K3 5 5 V1 B Da Dn D2 3 5 6 धर्म; G1 तस्माच् (for धर्मान्) K4 D1 शुश्रूषमानेभ्य —$^{d}$) Ś1 K1 Da1 सता पुन°, K2 4 सनातनं (K4 °नान्); T1 G (except G4) M2 4 सदा पुन (for सता पुन)

38 $^{a}$) T2 भवता (for विदुषा) V1 Da चेह, D7 T G नित्यं; M1, 3 धर्म (for चेति). —$^{b}$) M1, 3 नित्यम् (for धर्मम्) B1 चाहुर् (for आहुर्) —$^{c}$) B1 अप्रत्युक्तवत, Da2 अपि विक्रमत°; T2 अप्रतिमुवता. —$^{d}$) V1 दोपोयं K2-4 V1 B2 Da Dn D7 S (except M2 4) भवि(K2 °व)ता (for भवति). K2 4 विभो; D4 प्रभो

39 $^{a}$) K4 D5 om पौत्रैश्च Ca cites पुत्रै° and पौत्रै° (as in text) —$^{b}$) K2 3 Dn D8 पृष्टान् (for पृष्ट) Bo 3-5 D2 3 5 6 पुरातनान् (for सना°) —$^{c}$) K (except K5) V1 B Da Dn1 D1-7 S विद्वन्; D8 वृद्ध. Bo मानस्त्व; B1 Dn2 (before corr) मानैश्च; D7 T G °मानेभ्य° (for °मानैस्त्व) —$^{d}$) D1 भारतर्षभ

Colophon on marg in V1. —*Sub parvan* Ś1 K V1 B Da Dn D1-6 T2 G1 2 M राजधर्म —*Adhy name* D7 T1 G2-4 भीष्मकृष्णसवाद; G1 कृष्ण सवाद°, M1 3 भीष्मनियोग, M2 धर्मप्रवचननियोग. —*Adhy no* (figures, words or both) K6 B2 Da Dn D7 S 54 (as in text), B4 53, D2 3 52. —*Śloka no* Dn1 39, D8 38.

# ५५

वैशंपायन उवाच ।
अथाब्रवीन्महातेजा वाक्यं कौरवनन्दनः ।
हन्त धर्मान्प्रवक्ष्यामि दृढे वाङ्मनसी मम ।
तव प्रसादाद्गोविन्द भूतात्मा ह्यसि शाश्वतः ॥ १
युधिष्ठिरस्तु मां राजा धर्मान्समनुपृच्छतु ।
एवं प्रीतो भविष्यामि धर्मान्वक्ष्यामि चानघ ॥ २
यस्मिन्राजर्षभे जाते धर्मात्मनि महात्मनि ।
अहृष्यन्नृषयः सर्वे स मां पृच्छतु पाण्डवः ॥ ३
सर्वेषां दीप्तयशसां कुरूणां धर्मचारिणाम् ।
यस्य नास्ति समः कश्चित्स मां पृच्छतु पाण्डवः ॥ ४
धृतिर्दमो ब्रह्मचर्यं क्षमा धर्मश्च नित्यदा ।
यस्मिन्नोजश्च तेजश्च स मां पृच्छतु पाण्डवः ॥ ५
सत्यं दानं तपः शौचं शान्तिर्दाक्ष्यमसंभ्रमः ।
यस्मिन्नेतानि सर्वाणि स मां पृच्छतु पाण्डवः ॥ ६
यो न कामान्न संरम्भान्न भयान्नार्थकारणात् ।
कुर्यादधर्मं धर्मात्मा स मां पृच्छतु पाण्डवः ॥ ७
संबन्धिनोऽतिथीन्भृत्यान्संश्रितोपाश्रितांश्च यः ।
संमानयति सत्कृत्य स मां पृच्छतु पाण्डवः ॥ ८

C. 12. 1970
B. 12. 55. 6
K. 12. 54. 6

## 55

1 D₂ om the ref — b) D₃ M₁ कौरवनंदन — c) Da ह्रष्ट, Ca हन्त (as in text) G₂ M₂ धर्मं (for धर्मान्) — d) K₁ D₁ G₁ दृढ ; D₄ दृढ (for दृढे) K₂ वाङ्मनस — e) Ś₁ K₁.₂.₄ D₁ भवन् (for तव) — f) T₂ पूतात्मा (for भू°) Ś₁ ह्यस्मि, D₂ [ह्य]सि च (for ह्यसि) G₁ M₁ शाश्वत.

2 a) Ś₁ K₂ D₄ मा राजन्, K₃ मां तात, K₅ V₁ B Da Dn D₂.₅.₆ धर्मात्मा, M₁.₃ मा राजा M₂.₄ युधिष्ठिरो महाराजो — b) K₃ अन्वनु, Da प्रवानु, D₄ अस्येन्य (for समनु) G₃ पृच्छत (for पृच्छतु) K₆ Bo.₂₋₄ Dn₂ D₂.₆ मा (D₂.₆ मा) धर्म मनुपृच्छतु (K₆ °ति; B₂ °त), V₁ धर्मानेवान्वपृच्छत, B₁ त्वय मामनुपृच्छतु; Dn₁ D₂.₅ मा धर्माननु° — B₁ om 2c–4d — c) T₂ अत, M₂ तत्र (for एव) — d) Dn सर्वान् (for धर्मान्) K₅ V₁ B (B₁ om) D (except D₁.₃.₅) S चा(G₁ वा)निलान् (for चानघ)

3 B₁ om 3 (cf v l 2) — a) K₂ राजर्षयो (for °र्षभे) Ca as in text — c) K₁ अहृष्यन्, K₈ D₄ प्रहृष्टा, D₁ G₁ आहृष(G₁ °ष्य)न्न्; D₈ अहृष्य (for अहृष्यन्) K₈ D₄ मुनय°, Dn D₂ तृणाय (for ऋषय) — d) D₇ S (except T₂) मा (for मा) K₄ G₁ पाडव (G₁ °वा)

4 K₃.₄ (both hapl) B₁ om 4 (for B₁, cf v l 2) D₇ om (hapl) 4–6 G₂ reads 4 after 9 — a) K₆ V₁ Bo.₄.₆ Da दीप्तमनसां, D₈ °तपसां (for °यशसां) — b) K₈ दीप्त- (for धर्म) — d) S (except T₂ G₂) मा (for मा) — After 4, T₂ reads 6

5 D₁ G₂ om (hapl) 5 (for D₇, cf v l 4) V₁ reads 5–6 on marg — a) M₁.₃ शमो (for दमो) T₂ ब्रह्मचर्ये — b) K₁ तु (for च) T₂ नित्यता V₁ क्षमा धर्मादनित्यता — K₄ om 5cd — c) K₆ ज्ञानश्च (for ओजश्च) D₁ om तेजश्च — d) D₁ S (except M₂, G₂ om) मा (for मा) — After 5, K₄ (after 5ab) ₅ B Da Dn D₂.₃.₅.₆ read 8

6 K₆ D₇ om (hapl) 6 (for D₇, cf v l 4) V₁ reads 6 on marg T₂ reads 6 after 4 D₄ transp 6 and 7 — a) K₄ V₁ B D (except D₁.₄, D₇ om) शौर्यं (for शौचं) — b) K (K₆ om) V₁ B Da D₁₋₅ T₂ G₂ M क्षान्तिर् (for शान्तिर्) Ś₁ K₁ D₁ मानम् (for दाक्ष्यम्) D₈ असंभ्रमं — d) K₁ S मा (for मा) D₆ रक्षतु, D₃ च पृच्छ (for पृच्छतु),

7 K₃ D₈ om (hapl) 7–9, K₁ om 7abc D₄ transp 6 and 7 — a) Dn₂ ये (for यो) D₆ धर्मान् (for कामान्) Da₁ स (for the second न) — b) D₆ क्रोधान् (for भयान्) — d) K₁ D₇ S मा (for मा)

8 K₁.₂ D₈ om 8 (for K₃ D₈, cf v l 7) V₁ om (hapl) 8–9 K₄.₅ B Da Dn D₂.₃.₅.₆ read 8 after 5, K₆ repeating it (with v l) after 9 D₁ transp 8 and 9 — a) K₃.₄ B Da Dn D₁₋₃.₅.₆

C 12 1970
B 12. 55 9
K 12 54 9

सत्यनित्यः क्षमानित्यो ज्ञाननित्योऽतिथिप्रियः ।
यो ददाति सतां नित्यं स मां पृच्छतु पाण्डवः ॥ ९
इज्याध्ययननित्यश्च धर्मे च निरतः सदा ।
शान्तः श्रुतरहस्यश्च स मां पृच्छतु पाण्डवः ॥ १०

वासुदेव उवाच ।

लज्जया परयोपेतो धर्मात्मा स युधिष्ठिरः ।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥ ११
लोकस्य कदनं कृत्वा लोकनाथो विशां पते ।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥ १२
पूज्यान्मान्यांश्च भक्तांश्च गुरून्संबन्धिबान्धवान् ।
अर्घ्यार्हानिषुभिर्हत्वा भवन्तं नोपसर्पति ॥ १३

भीष्म उवाच ।

ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः ।
क्षत्रियाणां तथा कृष्ण समरे देहपातनम् ॥ १४
पितॄन्पितामहान्पुत्रान्गुरून्संबन्धिबान्धवान् ।
मिथ्याप्रवृत्तान्यः संख्ये निहन्याद्धर्म एव सः ॥ १५
समयत्यागिनो लुब्धान्गुरूनपि च केशव ।
निहन्ति समरे पापान्क्षत्रियो यः स धर्मवित् ॥ १६

---

सयधी( B2 °धा )नतिथीन्भृत्यान् ( B2 Da °न्सर्वान्, B5 °न्वृद्धान् ), K5 ( second time ) समुत्थितस्तथा कुर्यां — $^{b}$) D4 तथा ( for च य° ) K3 4 5 ( first time ) B Da Dn D2 3 5 6 सश्रितांश्चैव यो भृश ( Da यादृश ), D7 T2 सश्रितानाश्रितांश्च य° — $^{c}$) K5 ( second time ) संमानितश्च, B1 धर्मानयति, T2 समानयन्य° ( for °नयति ) K5 ( second time ) D4 सत्कारै° ( for सत्कृत्य ) — $^{d}$) D7 S ( except G2 ) मा ( for मां ) G1 माधव ( for पाण्डव° )

9 Before 9, G1 ins वासुदेव° K2 V1 D7 (hapl ) 8 om 9 ( for V1 K2 D8, cf v l 7, 8 ) B1 G4 om. ( hapl ) 9–10, D4 transp 8 and 9 — $^{a}$) D6 सदा ( for सत्य- ) M3 ·नित्य ( for नित्य° ) — $^{b}$) Da जाति , M3 ज्ञानि ( for ज्ञान ). M4 [ऽ]तिथि प्रिय — $^{c}$) Da सदा ( for सतां ) — $^{d}$) K1 D1 S ( G4 om. ) मा ( for मा ) T1 G1 3 माधव ( G3 °व° ) ( for पाण्डव ) — After 9, K5 repeats 8 ( with v l ), while G2 reads 4

10 B1 G4 om 10 ( cf v l. 9 ) V1 reads 10 on marg — $^{a}$) K4 दानानि; Da1 ·नित्यस्य, M4 ·शीलश्च ( for ·नित्यश्च ) — $^{b}$) D1 तदा ( for सदा ) — $^{c}$) D1 श्रांत° ( for शान्त ) — $^{d}$) K1 D7 S ( except G2 , G4 om ) मा ( for मा ) T1 G ( G4 om ) माधव ( for पाण्डव° )

11 D8 om the ref D1 भगवान् ( for वासुदेव ) D7 S om ( hapl ) 11 — $^{a}$) K3 B5 परयोपेता; K4 Da परया( K4 °तो )पेतो ( for परयो° ) — $^{b}$) K2 5 V1 B Da Dn D2–6 धर्मराजो ( for धर्मात्मा स ) K2 4 D8 वै ( for स ). — $11^{cd} = 12^{cd}$. V1 om. $11^{cd}$ — $^{d}$) D8 भवतो ( for भवन्तं )

12 Before 12, T2 G2 ins भगवान्; G4 कृष्ण° V1 reads $12^{ab}$ on marg — $^{a}$) Da1 लोकश्च; M3 4 लोकाना ( for लोकस्य ) Da1 कृदन K4 स लोकस्य वधं कृत्वा — $^{b}$) D7 S ( except M1 3 ) च पांडव° ( for विशां पते ) — $12^{cd} = 11^{cd}$. Ś1 K ( except K5 ) D4 8 om. $12^{cd}$

13 V1 om ( hapl ) 13 — $^{a}$) Da पूज्यामात्यांश्च; T1 G ( except G2 ) पूज्यमानाश्च, T2 पूज्यानन्याश्च; M1 3 °न्मन्यांश्च ( for °न्मान्यांश्च ) K5 चयांश्च; Da1 भद्रांश्च ( for भक्तांश्च ) — $^{b}$) B6 कुरु , B3 4 D° 3 5 6 8 गुरु ( for गुरून् ) Da मानवान् ( for बान्धवान् ) — $^{c}$) K2–4 B D ( except D1 7 ) अर्चार्हान्, K5 अप्य°, G2 अर्चा°; M3 4 पूजा° ( for अर्घ्या° ) Dn1 भित्त्वा, Dn2 ( before corr ) भूत्वा ( for हत्वा )

14 $^{d}$) D8 देहयातनां ( for °पातनम् )

15 D8 om 15 — $^{a}$) Ś1 K1 D1 पौत्रान्, K2 3 V1 B Da Dn D2 3 m 5 6 M2 भ्रातॄन्, D7 पित्र्यान् ( for पुत्रान् ) — $^{b}$) B6. 3 4 D2 3. 5 6 गुरु° ( for गुरून् ) — $^{c}$) D4 प्रवृत्यान् ( for प्रवृत्तान् ) Da1 स° ( for य° ). D7 सघे, S ( except T2 G1 ) सखे ( for संख्ये )

16 $^{a}$) K1 समर , B1 समनु , M4 स्वधर्म ( for समय ) K1 विप्रान् ( for लुब्धान् ) — $^{b}$) B1 हि ( for च ) D8 G1 ( before corr ) केशव — $^{c}$) D8 न हति ( for निहन्ति ) D7 निहति यस्तान्समरे, M1 3 निहन्यात्समरे पालान् — $^{d}$) G2 क्षत्रियान् ( for °यो ) Ś1 K1 D1 स च, Dn1 स हि, Dn2 स ह, D4 य° स्व ( for य स ) — After 16, N ( except Ś1 K1 D8 ) T G ins

121* यो लोभान्न समीक्षेत धर्मसेतुं सनातनम् ।
निहन्ति यस्तु समरे क्षत्रियो वै स धर्मवित् ।

आहूतेन रणे नित्यं योद्धव्यं क्षत्रबन्धुना ।
धर्म्यं स्वर्ग्यं च लोक्यं च युद्धं हि मनुरब्रवीत् ॥ १७

वैशंपायन उवाच ।

एवमुक्तस्तु भीष्मेण धर्मराजो युधिष्ठिरः ।
विनीतवदुपागम्य तस्थौ संदर्शनेऽग्रतः ॥ १८

अथास्य पादौ जग्राह भीष्मश्चाभिननन्द तम् ।
मूर्ध्नि चैनमुपाघ्राय निषीदेत्यब्रवीत्तदा ॥ १९

तमुवाचाथ गाङ्गेय ऋषभः सर्वधन्विनाम् ।
पृच्छ मां तात विस्रब्धं मा भैस्त्वं कुरुसत्तम ॥ २०

इति श्रीमहाभारते शान्तिपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

# ५६

वैशंपायन उवाच ।

प्रणिपत्य हृषीकेशमभिवाद्य पितामहम् ।
अनुमान्य गुरून्सर्वान्पर्यपृच्छद्युधिष्ठिरः ॥ १

राज्यं वै परमो धर्म इति धर्मविदो विदुः ।

C. 12. 1988
B. 12. 55. 2
K. 12. 55. 2

---

लोहितोदां केशतृणां गजशैलां ध्वजद्रुमाम् ।
महीं करोति युद्धेषु क्षत्रियो यः स धर्मवित् ।

[ Dn2 om lines 1-2 — (L 1) T G दे लोमान [illegible] (for the prior half) Da [illegible], D1 धनेषु (for [illegible]) B1 [illegible] (for [illegible]) — (L 2) D1 T G [illegible] (for स) K. [illegible] (for the prior half) K4 [illegible], D1 [illegible], D1 T1 G1 4 [illegible], T2 G1 [illegible] (G1 by corr [illegible]) (for [illegible]) — G2 om lines 3-4 — (L 3) D1 लोहितं, D1 [illegible], G1 (before corr) [illegible] (for [illegible]) K. 4 B1 [illegible] (for [illegible]) D1 [illegible], G1 (before corr) [illegible] (for [illegible]) — (L 4) D1 नदीं (for महीं) D1 [illegible] (for करोति) D [illegible], D1 स च, T2 स हि (for यः स) ]

17 a) D1 प्रयत्नेन (for आहूतेन) — b) T1 G1 चापवान् (for -बन्धुना) — c) D1 धर्मं K1 D1 स्वर्ग्यं हि, Dn1 स्वर्गं च (for स्वर्ग्यं च) V1 Dn1 D1 G1 लोक च, B1 युद्ध हि, M1. 3 लौक्य च (for लोक्य च) Dn2 D धर्मं स्वर्गं च लोकं (D1 °क्य) च — d) B1 क्षत्रन्य; M1 युद्ध च (for युद्ध हि)

18 D2 om the ref K1 om 18-20 — a) Ś1 D1 उक्ते, B2 उक्ता (for उक्तस्तु) — b) B (except B2) Dn D2 s 6 धर्मपुत्रो (for °राजो) — d) T2 तद्दर्शने (for संद°) B1 यत (for ऽग्रत) D1 तस्थौ सद्दर्शनाग्रतः; G1 तत्रस्थादर्शनेग्रतः

19 K1 om 19 (cf v 1 18) — b) K (K1 om) V1 B D (except D1) T G2-4 M2 4 चापि (for चाभि) D1 ननर्द, D3 ननाद; T2 [अ]भिनद्य (for ननन्द) Da न (for तम्) G1 भीष्मश्चापि न निंदितः — c) Da G3 चैवम् (for चैनम्) — d) G1 न्यषीद (for निषीद).

20 K1 om 20 (cf v 1 18) — b) K (K1 om) V1 B D (except D1) T1 G2 M2 4 वृषभ° (for ऋषभ°) D1 धन्विता (for धन्विनाम्) — c) K2 6 V1 B Da Dn D2 3 6 transp पृच्छ and मा Ś1 विश्रमो, K2 6 V1 Bo 1. 4 6 Dn D2 विश्रब्ध, K3 4 D1 4 7 S (except M2) विस्र(K3 D1 °श्र)ब्धो, D8 सरब्धो (for विस्रब्ध) D3 मां पृच्छस्वातिविश्रब्ध — d) K2 6 D1 मा भैषी°, G1 भावैस्त्व (for मा भैस्त्वं) K3 G1 (before corr) °सत्तम°, D1 नदन (for सत्तम)

Colophon om in K1 — *Sub-parvan* Ś1 K2-5 V1 B Da Dn D1-5 T2 G1. 2 M राजधर्म. — *Adhy name* D1 T1 G युधिष्ठिरप्रोत्साहन, M2 प्रश्नाभ्युपगम° — *Adhy no* (figures, words or both) K6 B2 Da1 Dn D1 S 55 (as in text), B1 4 54, D2. 8 53 — *Śloka no* Dn1 22, Dn2 21

## 56

1 D2 om the ref Dn2 transp 1 and 2 — a) K4 D1 प्रणिपत्य (for अभिवाद्य) — d) K1 अथा पृच्छद् (for पर्य°)

C 12. 1988
B 12. 55. 2
K 12. 53 2

महान्तमेतं भारं च मन्ये तद्ब्रूहि पार्थिव ॥ २
राजधर्मान्विशेषेण कथयस्व पितामह ।
सर्वस्य जीवलोकस्य राजधर्माः परायणम् ॥ ३
त्रिवर्गोऽत्र समासक्तो राजधर्मेषु कौरव ।
मोक्षधर्मश्च विस्पष्टः सकलोऽत्र समाहितः ॥ ४
यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा ।
नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतम् ॥ ५
अत्र वै संप्रमूढे तु धर्मे राजर्षिसेविते ।
लोकस्य संस्था न भवेत्सर्वं च व्याकुलं भवेत् ॥ ६
उदयन्हि यथा सूर्यो नाशयत्यासुरं तमः ।
राजधर्मास्तथालोक्यामाक्षिपन्त्यशुभां गतिम् ॥ ७
तदग्रे राजधर्माणामर्थतत्त्वं पितामह ।
प्रब्रूहि भरतश्रेष्ठ त्वं हि बुद्धिमतां वरः ॥ ८
आगमश्च परस्त्वत्तः सर्वेषां नः परंतप ।

2 G4 damaged. Before 2, Ś1 K B (except B1) Dn D1–3 5–7 T G1 2 ins युधिष्ठिर उवाच Dn2 transp 1 and 2 —a) K2–5 V1 B6 3–5 Da Dn D2–6 राज्ञा (D2 °ज्ञा), D7 8 S (G4 damaged) राजा (for राज्य) D2 3 5 6 हि (for वै) Ś1 K1 D1 युद्ध राज्ञा धर्म इति —b) Ś1 K1 D1 यत्तु (for इति) K5 D4 वेदाविदो, D8 वृत्त° (for धर्म°) —c) V1 B Da Dn2 D2, 3 5 6 एन, G2 एतद्, M2 4 एक (for एत) K3 भाग्य (for भार). K2 4 वै; S (except M2 4, G4 damaged) हि (for च) —d) K (except K1) M1 3 तं, D8 न, M4 स्व (for तद्) Da D7 S (G4 damaged) भारत (for पार्थिव).

3 K1 repeats (with v 1) 3ab after 3 —b) K1 (second time) महाद्युते (for पितामह) —c) K2 4 धर्मस्य (for सर्वस्य) —d) K V1 B Da1 Dn D2 3 5–8 T G M2 Ca राजधर्म° (K1 °र्मं, G1 °र्मैं), Da2 धर्मराज V1 D8 परायण°, Ca °यणम् (as in text)

4 G4 damaged —a) K3 5 D4 च; V1 B Da Dn D2 3 5–7 T G2 3 M हि; G1 [ऽ]पि- (for ऽत्र) K4 D6 समाशक्तो, B6 महानस्ति, B1 G1 स (G1 °स)मायुक्तो; Da मया स(Da1 श)क्तो, M1 3 समायत्तो (for °सक्तो) K1 त्रिवर्गं कथमप्युक्तो —b) M4 -धर्मे हि (for -धर्मेषु) D4 पार्थिव (for कौरव) —c) D7 धर्मस्य, D8 धर्मेषु (for धर्मश्च) —d) K5 सकलेत्र समागत.

5 G4 damaged —a) M1 3 रथा (for यथा) —b) D1 यथांकुश° (by transp) —D6 repeats 5c–6b after 6 —d) D1 यथा (for तथा) Dn2 प्रगृहण; D2 6 7 प्रहरणं, Ca प्रग्र° (as in text). D4 स तं (for स्मृतम्).

6 For the repetition of 6ab in D6, cf v l 5 G4 damaged —a) M2 तत्र (for अत्र) K2 4 [ए]व, K3 D4, 7 G1 M चेद्, T2 च (for वै). Ś1 K1 संप्रपूर्णे, T2 स्वं प्रमूढे (संप्र°). K1 वा (for तु) K5 V1 B Da Dn D1–3 5 6 8 अ(B3 Dn त)त्र चेत्संप्रमुह्ये(B1 °युज्ये-, Da °युद्धे-, D6 °मुह्य)त —b) G3 धर्म (for धर्मे) B1 राजनिषेविते, Da1 राजर्षि सेवितैः, D8 °सत्तमे —c) D7 T1 G2 3 त्रैलोक्य (for लोकस्य) K4 संख्या, Ca संस्था (as in text) T2 G1 त्रैलोक्यं सहसा राजन्. —d) N (except Ś1 K1 B1 4) T1 G (G4 damaged) M1 3 व्याकुली (for °लं)

7 a) D8 उदेत्तहि; T2 उदयन्वै (for °यन्हि). K3 भानुर् (for सूर्यो). K1 त सर्वं हि तदा सूर्यो —b) Dn2 D2 नाशयति K3 5 V1 B Da Dn D2 3 5 6 [अ]शुभ; K4 [अ]श्रुतं, D4 [आ]शु तत्, D7 S [अ]खिल; D8 [अ]विरात् (for [आ]सुर) K1 तपः, D4 तस° (for तम°) —c) Da1 Dn2 D7 T1 G1 3. 4 राजधर्मस् (for °धर्मास्) B1 आलोकस्य, Dn2 D2 3 5 6 आलोकान्, M1, 3 4 [अ]लौक्याम् (for [अ]लो°) —d) K1 नाशयति; K5 Dn1 निक्षिपति; Dn2 D7 T1 G1 3 4 आक्षिपति (for °पन्ति). Ś1 B1 D1 7 S (G4 damaged) मतिं (for गतिम्) D8 आक्षिपत्य शुभाशुभं

8 G4 damaged —a) K1 उदग्रे (for तदग्रे) V1 B Da Dn D2 3, 5 6 राजधर्मान्हि, D8 °धर्मेण (for °धर्माणाम्) —b) K2 3 T2 अर्थतस्त्व, V1 B Da Dn D2 3 5 6 मदर्थे त्व (for अर्थतत्त्व) —d) K3 5 V1 B Da Dn D2 3 5 6 धर्मभृता (for बुद्धिमता) D2 M1 3 वर; D8 वर

9 K2–4 om 9 —a) B1 तु (for च) D4 परश्चत्व हि (sic), D7 वरस्त्वत्त, G1 परित्यक्त° (for परस्त्वत्त) Cv as in text —b) B1 D4 3 परतप° (D4 °प). —c) D4 भवत. D7 हि वर, T2 G1 परम (for हि पर) B2 5 (m as in text) Da1 Ca बुद्ध; Da2 बुद्धिं, D7 बुद्ध्या (for बुद्धौ) —d) V1 B1 Dn2 D4 M2 हि; D7 8 M4 [ऽ]पि; T1 G2–4 [ऽ]तु (for

मम वैश्याः स्वकर्मस्था मामकान्तरमाविशः ॥ १६
त्रीन्वर्णाननुतिष्ठन्ति यथावदनसूयकाः ।
मम शूद्राः स्वकर्मस्था मामकान्तरमाविशः ॥ १७
कृपणानाथवृद्धानां दुर्बलातुरयोषिताम् ।
संविभक्तास्मि सर्वेषां मामकान्तरमाविशः ॥ १८
कुलदेशादिधर्माणां प्रथितानां यथाविधि ।
अव्युच्छेत्तास्मि सर्वेषां मामकान्तरमाविशः ॥ १९
तपस्विनो मे विषये पूजिताः परिपालिताः ।
संविभक्ताश्च सत्कृत्य मामकान्तरमाविशः ॥ २०
नासंविभज्य भोक्तास्मि न विशामि परस्त्रियम् ।
स्वतन्त्रो जातु न क्रीडे मामकान्तरमाविशः ॥ २१
नाब्रह्मचारी भिक्षावान्भिक्षुर्वाब्रह्मचारिकः ।
अनृत्विजं हुतं नास्ति मामकान्तरमाविशः ॥ २२
नावजानाम्यहं वृद्धान्न वैद्यान्न तपस्विनः । C 12 2805 B 12. 77 23 K 12 77 14

---

प्युपाश्रिता — c) D7 S तथा (for मम) D4 वैश्या D5 स्वधर्मस्था — d) K3 आविभ॰, D1 6 आविश, D7 T1 G1 3 4 M आविभ॰, T2 आलिह॰ — After 16, T2 G1 read 19ab, repeating it in its proper place

17 K1 2 D1 om. 17 (cf. v l. 15) Ś1 reads 17 on marg — a) K4. 5 V1 B Da D2 3 5 6 8 उपतिष्ठति, Dn उपजीवति, D7 T G M2 उपतिष्ठते — b) K4 D5 अनुसूयका॰, V1 B2 अनुपूर्वश॰ — c) Dn1 शूरा (for शूद्रा॰) M न मे शूद्रा विकर्मस्था — d) K3 D4 मामेकातरम् Ś1 आविभ , D4 आविश, D7 S आविभ॰ (T2 ॰लिह )

18 a) B1 कृपणानामवृद्धानां, B3 ॰नार्थवृ॰ — b) D1 corrupt — c) D7 सविभक्तोस्मि, G1 ॰भक्ता हि —d) K1 मा स्म कांतारम्, K3 D4 मामेकांतरम् Ś1 K1 2 आविभ , D4. 6 आविश, D7 S आविभ॰ (T2 ॰लिह॰)

19 B1 om (hapl ) 19-23 Ś1 K1. 2 4 D1 om (hapl ) 19 T2 G1 read 19ab for the first time after 16 — a) D7 S कुलानुरूप(G2 ॰पं॰)धर्माणां — b) D4 7 S प्रस्थितानां — D6 repeats 19c–20b after 28ab — c) K3 अस्युद्वत्तास्मि, D4 अम्युद्धर्त्तास्मि, T1 अव्युच्छेत्तास्म, G1. 3 M अप्युच्छे(G1 ॰प्युद्धे , M2 ॰व्युच्छे )त्तास्मि — d) K3 D4 मामेकातरम् D7 S आविभ॰ (T2 ॰लिह॰) (for आविश॰) — After 19, G4 reads 22

20 B1 om 20 (cf v 1 19) For the repetition in D6, cf. v 1 19 — a) D2 तपस्विनी — b) T2 G1 परिकरिपता॰ (for ॰पालिता॰) — c) D2 3 5 6 सविभक्तास्म (D6 ॰स्मि) — d) K3 मामेकातरम् Ś1 K2 D1 आविभ॰, K3 D4 आविश, D7 T1 G1 3 4 M आविभ॰; T2 आलिह॰

21 B1 om 21 (cf v 1 19) — a) D3 भोक्ताश्च — b) K5 V1 B0 3-5 Da Dn1 D2 3. 5 6 8 G1 2 M नाविशामि; B2 नाधियामि, D1 न भविशामि (sic) G2 परस्त्रिय॰ — c) D4 स्वतन्त्रे Dn2 जाति (for जातु) V1 B2 3 5 Da1 D2 3 5 8 नाक्रीडे — d) K3 मां माकातरम्, D4 मामे॰ (for माम॰) Ś1 K1 D1 आविभ॰, K4 आविश; D7 S आविभ॰ (T2 ॰लिह॰)

22 B1 K5 om 22 (for B1, cf v l. 19). Dn2 transp 22 and 23 G4 reads 22 after 19 — a) K3 D4 भिक्षुर्वा, D7 S भिक्षाशी (for भिक्षावान्). — b) T2 नाभिर् (for भिक्षुर्) K3 D4 नाब्रह्मचा (K3 ॰च )र्येपि, V1 B2 5 D2 3 T2 G1 2 M नाब्रह्मचर्यवान्, B0 3 4 Da Dn D3 5 6 वाब्रह्मचर्यवान्, D7 T1 G3. 4 नोब्रह्मचर्यवान् (for वाब्रह्मचारिक॰) — c) K2 3 B (B1 om ) Da Dn D2-4. 8 G2 अनृत्विजा (K3 ॰गा), D6 अन्वर्त्विजा, D7 T G1 3. 4 M नानृत्विजा (T2 ॰जो) K3 हुतिर्, D2 हुता K1 नास्मि; D7 S मेस्ति (for नास्ति) — d) Ś1 K1. 3 आविभ॰; D7 S आविभ॰ (T2 ॰लिह॰) (for आविश॰) D1 ममुकांतरमाविभ॰ (sic), D4 मामेकातरमाविश — D7 T G ins after 22 M ins after 23

192* कृत राज्य मया सर्वं राज्यस्थेनापि कार्यवत् ।
नाह व्युत्क्रामितः सत्यान्मामकान्तरमाविभ॰ ।

[(L 1) M कृत्य (for राज्य) G2 कृत मया सर्वमिद (for the prior half ) M2 कार्यवान् (for ॰वत्) — (L 2) M व्युत्क्रामिना ]

— After the above, M ins 193* (cf v 1 23)

23 K1 B1 D6 om 23 (K1 D6 hapl , for B1, cf. v 1 19) G1 reads 23 on marg Dn2 transp. 22 and 23 — ab) K5 Dn1 वेद्यान्, D8 lacuna (for वृद्धान्) Dn2 D2 3. 5 transp वृद्धान् and वैद्यान् G2 नावैद्यान् D1 तपस्विना — c) K3 राष्ट्रं Ś1

C 12. 2905
B 12. 77 23
K. 12 77 24

राष्ट्रे स्वपति जागर्मि मामकान्तरमाविशः ॥ २३
वेदाध्ययनसंपन्नस्तपस्वी सर्वधर्मवित् ।
स्वामी सर्वस्य राज्यस्य श्रीमान्मम पुरोहितः ॥ २४
दानेन दिव्यानभिवाञ्छामि लोका-
न्सत्येनाथो ब्राह्मणानां च गुप्त्या ।
शुश्रूषया चापि गुरूनुपैमि
न मे भयं विद्यते राक्षसेभ्यः ॥ २५
न मे राष्ट्रे विधवा ब्रह्मबन्धु-
र्न ब्राह्मणः कृपणो नोत चोरः ।
न पारजायी न च पापकर्मा
न मे भयं विद्यते राक्षसेभ्यः ॥ २६
न मे शस्त्रैरनिर्भिन्नमङ्गे ह्यङ्गुलमन्तरम् ।
धर्मार्थं युध्यमानस्य मामकान्तरमाविशः ॥ २७
गोब्राह्मणे च यज्ञे च नित्यं स्वस्त्ययनं मम ।
आशासते जना राष्ट्रे मामकान्तरमाविशः ॥ २८

राक्षस उवाच ।

यस्मात्सर्वास्ववस्थासु धर्ममेवान्ववेक्षसे ।
तस्मात्प्राप्नुहि कैकेय गृहान्स्वस्ति व्रजाम्यहम् ॥ २९

---

K8 6 D2 8 G3 स्वपिति, K3 4 D1 T2 G1 M2 स्वपिमि; D4 स्वप्निति, D5 स्वपीति K3 जागर्ति, D2 3 6 जानामि (for जागर्मि) Ca as in text. —d) Ś1 K2 D1 आविम , D7 S आविभ (T2 °लिह) (for आविश ) — D7 T G ins after 23 M after 192*

193* शुभ्रकर्मास्मि सर्वत्र न दुर्गतिभय मम ।
धर्मचारी गृहस्थश्च मामकान्तरमाविभ ।

[ (L 1) D7 शुद्धकर्मास्मि, T2 G1 M2 शुभ्रकर्माणि T1 G8 नरदुर्गे भय मम (for the post half) — (L 2) T2 आलिह (for आविभ ) ]

24 a) K5 V1 B Dn D2 3 6 0 8 आत्मविज्ञा( B2 °ज्ञा )नसंपन्नस्, Da सर्वविज्ञान° —b) D7 S (except T2 G3) सत्य (for सर्व ) —c) V1 transp सर्वस्य and राज्यस्य K1 G2 राजस्य, K5 B1 5 Da Dn D5 0 8 राष्ट्रस्य, M लोकस्य (for राज्यस्य) —d) K5 V1 B Da Dn D2 3 5 0 8 धीमान्, D7 S स्वामी (for श्रीमान्) D1 सम , D6 नाम (for मम)

25 a) G2 नानेन (for दानेन) V1 Da विद्याम् (for दिव्यान्) K1 -वांछयामि, G1 वांच्छाम (for वाञ्छामि) K5 Bo 2-5 Dn D2, 3 5 6 8 दानेन विद्यामभिवाञ्छयामि, B1 दानेन समभिवाञ्छामि —b) K4 D7 T G सत्येनाथ, K5 D8 °नार्थं, B1 6 D2 3 5 °नार्थो, Da °नार्था; D6 °नार्था D1 ब्रह्मणानां K8 D4 भक्त्या, B° तुष्ट्या, D3 (before corr ) युज्य, D5 युज्यां (for गुप्त्या) —c) M चैव (for चापि) —d) D4 नेमे (for न मे)

26 D1 6 8 G1 om (hapl ) 26 —a) B1 न मे नाग्ये, Dn2 न मे राष्ट्रा, D7 T G2-4 न मेस्ति राष्ट्रे (for न मे राष्ट्रे) —b) K3 M1-3 ना( K3 नो )ब्राह्मण K6 Bo 2-6 Da Dn D2 3 5 कितवो (for कृपणो). K8 M नापि, G2 नेत (for नोत) Some MSS चौर B1 न ब्राह्मणा कृपणा नेतरे च —c) Ś1 अपारजायी, K5 B Dn D2 3 5 अयाज्ययाजी, D4 न पारदार्य D7 S (G1 om ) न पाप( T2 °द )कारी न च पापवक्ता

27 a) D1 corrupt D7 S (except T2) अनिर्भिण्णम्. —b) D1 corrupt K5 V1 B Da Dn1 D2 3 5 6 8 गात्रे (Dn1 °त्रं, D5 °त्रैर्), D7 T1 G3, 4 अंग , T2 G1 3 M2 अग K1 अगव्यंगुलातरं (submetric) —c) D4 धर्मार्थे; M2 धर्मार्थी. —d) Ś1 K1, 2 D1 आविम, K4 आविश ; D7 S आविभः (T2 °लिह). D4 मामेकांतरमाविशा (sic)

28 D8 om. (hapl.) 28 —a) Ś1 K2 D1 न (for गो-) K1 *ब्रह्मणे च, K8 गोब्राह्मणेषु, K4 5 V1 B Da Dn D2 3 5 6 T2 G1 गो( K4 स )ब्राह्मणेभ्यो (for °णे च ) K1 5 B3 Dn यज्ञेभ्यो, K8 lacuna, K4 V1 Bo-2 4 6 Da D2 3 5 6 राज्ञश्च, D7 T G राष्ट्रे (G4 °ज्ञे) च, M राज्ये च (for यज्ञे च) D4 गोब्राह्मणिषु यज्ञिषु (sic). —b) K1 नित्ये B1 पूजाविधौ (for स्वस्त्ययनं ) B2 नम ; D7 T G नरा , M जना (for मम) —After 28ab, D6 repeats 19c–20b —c) K1 माशामते; V1 Da प्रकाश( Da °श )ते; B2 T2 G1 2 M2 आशसते, D7 T1 G3 4 M1 3 4 आशसते (for आशासते) D7 T G हि (T2 च) राष्ट्रे मे, M हि मे राष्ट्रे (for जना राष्ट्रे) —d) Ś1 K1 2 D1 आविम , D7 S आविभ (T2 °लिह ) (for आविश ) D4 मामेकातरमाविश —After 28, G2 M2 ins 194*.

29 D8 G2 M2 om the ref. D7 T G1 3 4 M1 3 4 ins after the ref G2 M2 after 28

194* नारीणा व्यभिचाराच्च अन्यायाच्च महीक्षिताम् ।

येषां गोब्राह्मणा रक्ष्याः प्रजा रक्ष्याश्च केकय ।
न रक्षोभ्यो भयं तेषां कुत एव तु मानुषात् ॥ ३०
येषां पुरोगमा विप्रा येषां ब्रह्मबलं बलम् ।
प्रियातिथ्यास्तथा दारास्ते वै स्वर्गजितो नराः ॥ ३१

भीष्म उवाच ।

तस्माद्द्विजातीन्रक्षेत ते हि रक्षन्ति रक्षिताः ।
आशीरेषां भवेद्राज्ञां राष्ट्रं सम्यक्प्रवर्धते ॥ ३२
तस्माद्राज्ञा विशेषेण विकर्मस्था द्विजातयः ।
नियम्याः संविभज्याश्च प्रजानुग्रहकारणात् ॥ ३३
य एवं वर्तते राजा पौरजानपदेष्विह ।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥ ३४

C 12. 2916
B 12. 77. 34
K. 12. 77. 42

इति श्रीमहाभारते शान्तिपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

विप्राणां कर्मदोषाच्च प्रजानां जायते भयम् ।
अवृष्टिर्मारको रोग सततं क्षुद्भयानि च ।
विग्रहश्च सदा तस्मिन्देशे भवति दारुण ।
यक्षरक्षःपिशाचेभ्यो नासुरेभ्य कथचन । [5]
भयमुत्पद्यते तत्र यत्र विप्रा सुसंयता ।
गन्धर्वाप्सरसःसिद्धा पन्नगाश्च सरीसृपा ।
मानवाश्च जिघांसन्ति यत्र नार्य पतिव्रता ।
ब्राह्मणा क्षत्रिया वैश्या यत्र शूद्राश्च धार्मिका ।
नानावृष्टिभयं तत्र न दुर्भिक्षं न विभ्रम । [10]
धार्मिको यत्र भूपालो न तत्रास्ति पराभव ।
उत्पाता न च दृश्यन्ते न दिव्या न च मानुषा ।

[ (L. 1) T2 G1 महात्मना (for महीक्षितान्) — (L 2) T2 G1 विद्यते (for जायते) — (L 3) M2 मरणो (for मारको) D7 दोष; G4 योग (for रोग) — (L 4) T2 G1 निग्रहश्च T2 G1. 2 M2 नदा (for सदा) T2 G1 दारुणे — (L 6) D7 सुसनुना, T2 ममनुना. — (L 7) M1. 3 सिग्धा (for सिद्धा) — (L 10) G1 नानुभिक्ष (for न दुर्भिक्ष) M4 दुर्भिक्ष न च विभ्रम (for the post half) — (L 12) M4 न च दिव्या न मानुषा (for the post half) ]

— a) Ś1 तस्मात्, B1 यस्य, M2 सर्वात् (for यस्मात्) — b) Ś1 (by corr) K2 D1 [अ]न्ववीक्ष(D1 °क्ष्य)से; D1. 6 °वक्ष्यसे — c) D1 (also as in text) कौंतेय; D4 केकेय; M राजेंद्र (for कैकेय) — d) K1 गृहा, K3 गेहान्, K4 V1 Bo 2-5 D (except D1. 4. 6 7) गृह M साधु (for स्वस्ति) D6 om. जाम्यहम् B1 राष्ट्र स्वर्गजितो नृप

30 a) D1 गोब्रह्मणा K1 रक्ष्य K3 5 B Da Dn D2-7 8 येषां गोब्राह्मण रक्ष्य (B1 °णो रक्षा). — b) D8 रक्ष्या तु K1 केकया, K3 B D2 8 कैक(D2 °कै)य, D8 केकया. — c) K4 Da रक्ष(K4 °क्ष्ये)भ्यो, D4 रक्षोभ्या D2 न रक्षो मम तेषां (submetric) — d) K1 हि, D1 न (for तु) Da M1 3 4 पापक, Dn D6 पापकात्, D7 T1 G2-4 M2 पातक, D8 मानुषान्, T2 G1 पावकात् (G1 °न्) (for मानुषात्)

31 D1 om (hapl.) 31a — a) G1 एषा — b) K5 V1 B D (except D1 4 7) येषां ब्रह्मपर बल (B4 °बल पर); G1 M2 ये(G1 ए)षां ब्रह्मबलाबल — c) K2 दारास्, K6 D4 पौरास् (for दारास्) K5 V1 B Da Dn D2 3 5 6 8 अतिथिप्रियास्तथा पौरास् (hypermetric), D1 प्रयातिथ्यास्तदा दारा (sic), D7 T G सुरक्षितास्तथा पौरास् (D7 G2 विप्रास्), M ब्रह्मप्रियास्तथा पौरास् — d) K1 वरा; K3 V1 Bo 2-5 Da Dn D4 6 8 S नृपा; D8 नर. B1 ते वै स्वर्गपरा नृप

32 Ś1 K1. 4 D1 4 7 8 S om the ref. — a) G1 रक्ष्येत — b) K2 4 V1 D1. 6 रक्ष्यति; D2 lacuna (for रक्षन्ति) D2 रक्षंता D7 T G1 3 4 ते रक्षतीह रक्षिता — c) D1 4 एषा, D8 °ष (for °षा) K6 V1 B D (except D1 4) S राजन् (D8 °ज्य) (for राज्ञा) — d) K1 राष्ट्रे, K5 V1 B D (except D1. 4) S राज्ञा (for राष्ट्रं) K3. 5 V1 B D T G M2-4 प्रवर्तता; (D1 °ते); M1 प्रवृत्तते

33 Before 33, Ś1 K1-4 D1. 4 ins भीष्म उवाच 33cd = (var) 12 77 11cd — c) K2 4 D1 संविभक्ताश्च (for °भज्याश्च) — d) V1 B1 2 Da Dn T2 तदनुग्रह (for प्रजानु°)

34 Before 34, T2 ins श्रीभीष्म. — a) Da Dn एव यो (by transp) — b) D1 पौरा (for पौर). D7 S [अ]पि (for [इ]ह)

# ७९

C 12. 2817
B. 12. 78. 1
K. 12. 78. 1

युधिष्ठिर उवाच ।
व्याख्याता क्षत्रधर्मेण वृत्तिरापत्सु भारत ।
कथंचिद्वैश्यधर्मेण जीवेद्वा ब्राह्मणो न वा ॥ १
भीष्म उवाच ।
अशक्तः क्षत्रधर्मेण वैश्यधर्मेण वर्तयेत् ।
कृषिगोरक्षमास्थाय व्यसने वृत्तिसंक्षये ॥ २
युधिष्ठिर उवाच ।
कानि पण्यानि विक्रीणन्स्वर्गलोकान्न हीयते ।
ब्राह्मणो वैश्यधर्मेण वर्तयन्भरतर्षभ ॥ ३
भीष्म उवाच ।
सुरा लवणमित्येव तिलान्केसरिणः पशून् ।
ऋषभान्मधु मांसं च कृतान्नं च युधिष्ठिर ॥ ४
सर्वास्ववस्थास्वेतानि ब्राह्मणः परिवर्जयेत् ।
एतेषां विक्रयात्तात ब्राह्मणो नरकं व्रजेत् ॥ ५
अजोऽग्निर्वरुणो मेषः सूर्योऽश्वः पृथिवी विराट् ।
धेनुर्यज्ञश्च सोमश्च न विक्रेयाः कथंचन ॥ ६
पक्वेनामस्य निमयं न प्रशंसन्ति साधवः ।
निमयेत्पक्वमामेन भोजनार्थाय भारत ॥ ७

---

Colophon — *Sub-parvan* Ś1 K1-3 5 V1 B0-3 6 Da Dn D1-7 T G1 2 4 M राजधर्म. — *Adhy. name* K3 D4 7 T1 G2-4 M2 के( D4 कै )कयराक्षससंवाद , V1 B ( except B3 ) Da D6 कैके( B1 2 6 °फ )योपाख्यानं — *Adhy no* ( figures, words or both ) K5 D7 S 79 , B1 75 , B4 D2 76 , Da1 78 ( as in text ), Dn 77 , D8 74. — *Śloka no* Dn 34 , D8 32.

## 79

1 D8 om. the ref. M4 वैशंपायन ( for युधिष्ठिर ) — K5 D7 S read 1 after the ref of 12 77 1. — a ) B0 6 आख्याता, M1 ( first time ) व्याख्यात . K6 ( second time ) V1 B Da Dn D2 3 5 6 8 राज ( for क्षत्र ). M2 ( first time ) व्याख्यातेय क्षत्रधर्मे ; Cv as in text. — b ) D6 भारते — c ) K2 3 6 ( second time ) V1 B Da2 D2-6 8 T2 G1 2 M ( last seven second time ) कथ स्विद्. D8 देश्य ( for वैश्य ) K6 D7 S ( all first time ) कार्पण्याद्वैश्य( T1 G4 °देव ; T2 G1 M1, 2 °दैन्य )वृत्त्या तु ; — d ) K2 6 ( second time ) V1 B1-3 Da Dn D2, 3 5 6 सजीवेद् , B0 4 6 T2 G1 3, 4 M ( all except B0, 4 6 first time ) जीवेत, D7 T1 G3 ( all first time ) जीवतु ( for जीवेद्वा ). T2 G1 ( both first time ) [ऽ]थ ( for न ). K6 ( first time ) जीवतो ब्राह्मणेन वा.

2 D8 T2 G1 M2, 4 om. the ref G3 om ( hapl ) 2-3 with both ref. D7 S read 2 after the ref of 12. 77. 2. — a ) K4 D8 अशक्त ; M4 ( second time ) नशक्तो. D7 S ( all first time ) अभा( G1, 2 M3 °भ )वे क्षत्रधर्माणां. — b ) D2 3 6 वर्तेते ; T2 G1 ( both second time ) वर्तयन् — c ) = Manu 10 82c D7 T1 ( both second time ) कृषि ( for कृषि- ). Some MSS ( both times ) गोरक्षम्. Ś1 K2 4 D1 आदाय ; K1 आधाय ( for आस्थाय ). — d ) K1 वृत्तिलक्षये ; B1 T2 ( first time ) वृत्तस°.

3 G3 om 3 ( of v. l 2 ) D8 T2 G1 M4 om the ref — a ) K1 M1 3 पुण्यानि, Ca प° ( as in text ). K1 चिक्रीण, K6 V1 B1 2 Da Dn विक्रीय ; G2 [अ]विक्रीणन् , M1 विक्रीणात् , M4 °डन् ( for °णन् ). — b ) B0 M1-3 स्वर्गलोके M1-3 महीयते ( for न ही° ). — c ) Ś1 K2 4 -धर्मे च ( for धर्मेण ).

4 D8 om the ref — a ) Ś1 K1 D1 4 सुरा ( for सुरा ) K4 D3 [ए]वं, D7 S [ए]तत् ( for [ए]व ) — b ) B D3 5 6 केशरिण° ( D5 °ण ), G4 केसरिणं ; Ca v °ण ( as in text ) — c ) Ś1 K2 4 D1 वृषभान् ( for ऋष° ) K4 D6 मासाद्य ( for मांस ). — d ) B1 स ( for च )

5 a ) G1 [ए]तासु ( for [ए]तानि ). B1 सर्वे विक्रय घृतानि, D6 सर्वाश्ववस्थाश्वेतानि — M4 om ( hapl ) 5bc. — c ) D7 S ( except T2, M4 om. ) एतस्य ( for एतेषां ) B1 विक्रयी. — d ) D7 S नरके. K1, 3 V1 B Da D2 3 5 7 8 S पतेत् ( for व्रजेत् ).

6 a ) Ś1 K1 अजोश्वो ; K2 अश्वोजो ; K4 मनोग्निर् ; D1 अश्वो*, Cv अजोऽग्निर् ( as in text ) K2 वरुणं. — b ) G1 ( before corr as in text ) सूर्योग्नि°. Da वरुणो ( for पृथिवी ). — d ) Ś1 K1 M4 विक्री( M4 °क्रे )यात , B0 त्रिकेय , D1 त्रिक्रीया .

वयं सिद्धमशिष्यामो भवान्साधयतामिदम् ।
एवं समीक्ष्य निमयन्नाधर्मोऽस्ति कदाचन ॥ ८
अत्र ते वर्तयिष्यामि यथा धर्मः पुरातनः ।
व्यवहारप्रवृत्तानां तन्निबोध युधिष्ठिर ॥ ९
भवतेऽहं ददानीदं भवानेतत्प्रयच्छतु ।
रुचिते वर्तते धर्मो न बलात्संप्रवर्तते ॥ १०
इत्येवं संप्रवर्तन्त व्यवहाराः पुरातनाः ।
ऋषीणामितरेषां च साधु चेदमसंशयम् ॥ ११

युधिष्ठिर उवाच ।

अथ तात यदा सर्वाः शस्त्रमाददते प्रजाः ।
व्युत्क्रामन्ति स्वधर्मेभ्यः क्षत्रस्य क्षीयते बलम् ॥ १२
राजा त्राता न लोके स्यात्किं तदा स्यात्परायणम् ।
एतन्मे संशयं ब्रूहि विस्तरेण पितामह ॥ १३

भीष्म उवाच ।

दानेन तपसा यज्ञैरद्रोहेण दमेन च ।
ब्राह्मणप्रमुखा वर्णाः क्षेममिच्छेयुरात्मनः ॥ १४
तेषां ये वेदबलिनस्त उत्थाय समन्ततः ।
राज्ञो बलं वर्धयेयुर्महेन्द्रस्येव देवताः ॥ १५
राज्ञो हि क्षीयमाणस्य ब्रह्मैवाहुः परायणम् ।
तस्माद्ब्रह्मबलेनैव समुत्थेयं विजानता ॥ १६

C. 12 2932
B. 12 78. 16
K 12. 79 15

---

7 B1 D1 om. (hapl) 7–8 — $^{a}$) D4 पक्ष्मा नामस्य, D6 पक्षेन॰ Ś1 D7 8 T2 G3 M1 Cap नियम, Ca निमयं (as in text) K2 पक्षेनास्य विनिमयं, G4 विपक्षेन्त्वनमस्यति (sic), Cv as in text — $^{b}$) K2 प्रशसति न (by transp), G4 प्रशसति हि K1 नाधर्मोस्ति कदाचन (=8$^{d}$) — K1 om. 7$^{cd}$ — $^{c}$) K2 4 निमयं, K8 निमेप, V1 D4 T2 नियमे; D7 G1 नियमेत्, D8 निमयन्; M निमेय K2 4 D6 पक्ष मासेन; V1 D8 ॰मानेन (for पक्षमासेन)

8 B1 D1 om 8 (cf v 1 7) K1 reads 8 on marg — $^{a}$) K4 अशिष्याम्ये K1 वय सिध्येनाशि शामो (sic) — $^{b}$) K8 साधयिताम्, Ca ॰यताम् (as in text) K1 5 V1 B0 8–5 Da D3 5 8 इम, D2 इमां (for इदम्) — $^{c}$) K1 B2 4 Dn D4 T2 G2 M2 सवीक्ष्य K1 नियमान्; K2 नियमन्, K8 M2 निमये, K4 5 V1 D1. 6 8 नियमं, Da Dn1 निमयेन्, D2 निमय, D7 G1 समय; T1 G2–4 समयन्, M1–8 निमयो, M4 नमयो (for निमयन्) — $^{d}$) K8 नाधर्मा G1 [ऽ]स्ति (for ऽस्ति) K4 V1 B2 Da Dn D7 T G M2 कथ चन, M1. 3 4 युधिष्ठिर (for कदाचन)

9 $^{a}$) K4 D1 वर्णयिष्यामि — $^{b}$) B2 Da Dn D8 5 पुरा (for यथा) B1 Da वृत्त, B2 धर्मं (for धर्म॰) V1 B2 Da Dn D7 S सनातन॰ (B2 Da ॰नं), B1 पुरातन — K2 om (hapl.) 9$^{c}$–11$^{b}$ — $^{d}$) K4 युधिष्ठिर॰

10 K2 om. 10 (cf v 1. 9) — $^{a}$) K4 D1. 4 भव तेद, D7 M1 8 भवतेह (for ॰तेऽहं) K8 Dn1 D1 ददामीदं; K4 D1 M4 ददानीति — $^{b}$) G1 एतान् (for एतत्) B0 प्रयच्छति; D7 T G प्रतीच्छतु (for प्रय॰) — $^{c}$) K1 corrupt, Da Dn1 D4 रुचितो, D7 S (except M2) उ(T1 शु)चिते; Ca रुचिते (as in text) — $^{d}$) T2 बालात् M4 सप्रवर्तिते

11 K2 om 11$^{ab}$ (cf v 1 9) — $^{a}$) K8 [प्]त; G1 [प्]वत् (for [प्]व) K8 D4 सप्रवर्तेत; K4 ॰वर्तव्य; K5 V1 B Da Dn D1–8 5–8 S ॰वर्तते — $^{b}$) D4 व्यवहार॰ पुरातन — $^{d}$) D1 corrupt K8 5 B Dn D2–8 T G चै(G1 चे)तद् (for चेदम्) V1 Da M साधु चैव न सशय

12 D8 om the ref — $^{a}$) D7 S अथ राजन्प्रजा॰ सर्वा॰ — $^{b}$) G1 शास्त्रम् D4 आददे (submetric) (for आददते) D7 S यदा (T2 ॰या) (for प्रजा॰) — $^{c}$) K4 D7 G1 M व्युत्क्रमते (K4 ॰ति), D6 T1 G2–4 व्युत्क्रामंते K8 स्वधर्मं च, D7 S च धर्मेभ्य॰ — $^{d}$) K8 जलं (for बलम्)

13 $^{a}$) V1 B Da Dn D6 तु, D8 नु (for न) K8 5 V1 B Da Dn D1–6 8 लोकस्य (for लोके स्यात्) D7 S तदा त्राता हि (T2 G1 2 M2 तु) को नु स्यात् — $^{b}$) K6 V1 B Da Dn D2 8 5 6 8 कथ च स्यात्, D7 S को धर्मं किं (for ॰किं तदा स्यात्) — T2 G1 repeat 13$^{cd}$ after 19 — $^{c}$) K1 M1. 3 4 एत (for एतन्) T2 न॰ (for मे) — $^{d}$) K2 3 5 V1 B D (except D1) नराधिप (for पितामह)

14 Dn2 D8 om. the ref. — $^{b}$) K4 बलेन (for दमेन) — $^{d}$) G4 क्षमम् B1 क्षेममिच्छेयुरात्मन

15 $^{a}$) Dn2 D8 येषां B0 8 D2 चैव; B1 Da चेह, B4 damaged, Ca वेद॰ (as in text) D5 तेषां तु ये वै बलिनस — $^{b}$) K6 B Da Dn D6 तेभ्युत्थाय; V1 ते व्युत्थान, D1 corrupt, D. 5 5 8 से व्यु(D8 ह्यु)

C 12.2934
B 12.78.17
K 12.78.17

यदा तु विजयी राजा क्षेमं राष्ट्रेऽभिसंदधेत् ।
तदा वर्णा यथाधर्ममाविशेयुः स्वकर्मसु ॥ १७
उन्मर्यादे प्रवृत्ते तु दस्युभिः संकरे कृते ।
सर्वे वर्णा न दुष्येयुः शस्त्रवन्तो युधिष्ठिर ॥ १८

युधिष्ठिर उवाच ।

अथ चेत्सर्वतः क्षत्रं प्रदुष्येद्ब्राह्मणान्प्रति ।
कस्तस्य ब्राह्मणस्त्राता को धर्मः किं परायणम् ॥ १९

भीष्म उवाच ।

तपसा ब्रह्मचर्येण शस्त्रेण च बलेन च ।
अमायया मायया च नियन्तव्यं तदा भवेत् ॥ २०
क्षत्रस्याभिप्रवृद्धस्य ब्राह्मणेषु विशेषतः ।
ब्रह्मैव संनियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम् ॥ २१
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ २२
यदा छिनत्त्ययोऽश्मानमग्निश्चापोऽभिपद्यते ।
क्षत्रं च ब्राह्मणं द्वेष्टि तदा शाम्यन्ति ते त्रयः ॥ २३
तस्माद्ब्रह्मणि शाम्यन्ति क्षत्रियाणां युधिष्ठिर ।
समुदीर्णान्यजेयानि तेजांसि च बलानि च ॥ २४

---

त्थाय; D4 °उत्थाय ते (for त उत्थाय) —c) D1 राज्ञे M वर्धयति (for °येयुर्) —d) D1 om (? hapl) from स्येव up to क्षीयमाण (in 16a) K4 D6 देवता

16 D1 om. up to क्षीयमाण (cf v l 15) —a) K5 V1 B D (except D4 7, D1 om) [ऽ]पि (for हि) — D1 repeats $16^{cd}$ after 17 —c) K2 D4 बलेनेव; D1 7 बलेनैवं, D8 बलो नैव —d) K1 समुक्षेयं; Dn2 D6 संमुखेय, D4 समुत्थेये. G1 (before corr) विजानत.

17 a) K3 यतानु (for यदा तु) Da Dn2 सुविजयी, D1 तन्यजये (sic) (for तु विजयी) —b) D7 T1 G3 राष्ट्रे हि, G2 राष्ट्रेषु (for राष्ट्रेऽभि-) Ś1 K1 4 D1 [ऽ]भिसधयेत्, K3 °मत्रयेत्; D4 विवर्धयेत्, M हि (M4 [ऽ]भि-) सदधे —c) T2 G1 4 यथा (for तदा) G2 M1 यदा धर्मे, G3 यथा धर्मे K2 तदा वर्णाश्रया धर्मम् —d) K3 5 V1 Bo 2-5 Da Dn D2 3 5-8 T G1 3 4 M1. 3 4 नि(Bo न)विशेयु; B1 निर्विशेष, G2 निवेशेयु°, M2 विविशेयु° K5 Bo 3-5 Dn D2 3 5 6 8 कथचन (for स्वकर्मसु) D1 माविशेस्व स्वकर्मस्व (sic) — After 17, D1 repeats $16^{cd}$

18 a) K1 उर्मर्यादे (sic), K4 तन्मर्यादे, V1 B2 Da अमर्यादे (V1 °द), D7 T G2-4 M4 निर्मर्यादे K5 Bo 1 प्रवर्ते तु (for प्रवृत्ते तु) —b) B1 शकरे, D6 सकरी —c) K3 न दुष्टेयु°, D1 वरुष्येयु°, G2 M2 न दूष्येयु°, G4 damaged T2 G1 सर्ववर्णान्प्रदुष्यति

19 D3 om. the ref —a) T1 G2 3 सर्वथा (for सर्वत) B1 ब्रह्मैव सन्नियन्त्रि स्यात्. —b) M4 प्रदुष्येद् K4 V1 B Da Dn D2 3. 5 6 8 ब्राह्मणं, D1 ब्रह्मणान्, D4 ब्राह्मणे D4 पितः (for प्रति) D7 T1 G2-4 ब्राह्मणान्प्रविवा(G4 °यो)धते. —c) D4 क्षत्र हि; D7 S कस्तत्र (for कस्तस्य) K1 4 D1 6 ब्रह्मणस्, D2 3 T2 ब्र(T2 ब्रा)ह्मण, D7 T1 G3 4 ब्राह्मणांस्, D8 ब्राह्मणास् T2 पाता (for त्राता) — After 19, T2 G1 repeat $13^{cd}$

20 D3 G3 om the ref —d) D4 6 7 T1 G2 3 नियतव्यस्, G4 damaged Da सदा, G2 तया, G4 damaged (for तदा).

21 = (var) Manu 9 320 —a) K2 D7 S क्षत्रस्याभि(D7 S °ति)प्रवृत्तस्य, K3 क्षत्रियस्यातिप्रवृत्तस्य (hypermetric), K4 V1 B Dn D2 3 5 6 8 क्षत्रियस्याति(V1 °प)वृत्तस्य, Da क्षत्रियस्यापवृत्तेषु, D4 क्षत्रस्य चातिवृत्तस्य —c) D4 ब्रह्मेव, D7 T1 G3 4 ब्रह्म वै K4 D4 संनियत(D4 °तु)स्यात् (sic), D1 °यत्रस्य (for °यन्तृ स्यात्) —d) V1 Bo 1 5 Da1 D2 3 5 क्षात्रं (B1 क्षत्रे, D2 3 5 क्षत्र) ब्रह्म सनातन, B2-4 क्षत्रं ब्रह्मसमुद्भवं

22 = Manu 9 321 Ādi 1423* 5 15 32, 38 13 12 56. 24 —a) K1 [ऽ]ग्नि D2 ब्रह्मत; G4 ब्रह्मण° Cv अद्भ्योऽग्निर्ब्रह्म क्षत्रम् (submetric) —b) Ś1 K4 अश्मतो, D1 अश्मपो M2 उत्तम (for उत्थितम्) —c) Da एषा T2 G2 M1. 3 सर्वगतं (for °त्रगं) —d) D7 T1 G3 8 स्वस्व (for स्वासु).

23 a) K3 भिनत्ति, K4 छिनति, D4 हिनस्ति, T2 छिंदति (for छिनत्ति) G1 यो (for [अ]यो) —b) K1 [ऽ]भ्यपद्यते; K5 B1-3 Da Dn1 [ऽ]भिगच्छति; V1 Bo. 4 5 D2 3 5 [ऽ]भि(D2 3 5 °नु)मथति, Dn2 D6 °मर्छति, D7 हि हति च, D8 [ऽ]भिमन्यति, T G1 3 4 [ऽ]भि(T2 °प)हति च, G2 M निहति च (for [ऽ]भिपद्यते) —c) K3. 5 B Da D2-6 M1. 3 4 ब्राह्मणान्, G1 ब्राह्मण —d) D1 तथा (for तदा) K5 B4 शाम्यति, B1 शम्यंति, Dn D8 क्षय(Dn2 °श्य)न्ति, G1 शुद्ध्यंति (for शाम्यन्ति).

ब्रह्मवीर्ये मृदूभूते क्षत्रवीर्ये च दुर्बले ।
दुष्टेषु सर्ववर्णेषु ब्राह्मणान्प्रति सर्वशः ॥ २५
ये तत्र युद्धं कुर्वन्ति त्यक्त्वा जीवितमात्मनः ।
ब्राह्मणान्परिरक्षन्तो धर्ममात्मानमेव च ॥ २६
मनस्विनो मन्युमन्तः पुण्यलोका भवन्ति ते ।
ब्राह्मणार्थं हि सर्वेषां शस्त्रग्रहणमिष्यते ॥ २७
अति स्विष्टस्वधीतानां लोकानति तपस्विनाम् ।
अनाशकाग्न्योर्विशतां शूरा यान्ति परां गतिम् ।
एवमेवात्मनस्त्यागान्नान्यं धर्मं विदुर्जनाः ॥ २८
तेभ्यो नमश्च भद्रं च ये शरीराणि जुह्वति ।
ब्रह्मद्विषो नियच्छन्तस्तेषा नोऽस्तु सलोकता ।
ब्रह्मलोकजितः स्वर्ग्यान्वीरांस्तान्मनुरब्रवीत् ॥ २९
यथाश्वमेधावभृथे स्नाताः पूता भवन्त्युत ।
दुष्कृतः सुकृतश्चैव तथा शस्त्रहता रणे ॥ ३०
भवत्यधर्मो धर्मो हि धर्माधर्मावुभावपि ।
कारणाद्देशकालस्य देशकालः स तादृशः ॥ ३१

C. 12. 2919
B 12. 78. 32
K 12. 78 32

---

24 ᵃ) K1.4 ब्राह्मणि; M4 ब्रह्माणि — ᵇ) D4 युधिष्ठिर- — ᶜ) K1 [स]जीयानि, M [स]नीकानि — ᵈ) Da1 बलेन, D बलासि (for बलानि)

25 Before 25, D- T G3.4 ins युधिष्ठिर — ᵃ) Ś1 K1 मृदुर्भूते; K4 D1 मुदु(D1 ˚दू)र्भूते, K5 V1 Bo 1.4 5 D2 3.5.6.8 मृदौ भूते; B2 Da मृदुभूते — ᵇ) M क्षत्रधर्मे (for ˚वीर्ये) K5 दुर्बलं — ᵈ) K1 D2 T G भारत; K5 सर्वत (for सर्वशः)

26 ᵃ) Dn1 D5 ते (for ये) — After 26ᵃᵇ, D7 T G2-4 ins

195* ब्राह्मणान्परिरक्षन्ति तेषां लोका भवन्ति के ।
[ T2 लोके (for लोका) T2 G2 ते (for के) ]

Before 26ᶜᵈ, D7 T1 G3.4 ins भीष्म — ᶜ) M1.5 ब्राह्मणा B1 D5 परिरक्षति — ᵈ) G4 damaged K4 स्वात्मनम्; D6 स्वात्मान

27 ᵃ) D4 मन्युवत — ᵇ) K2 5 B1 Da Dn T2 पुण्यस्लोका (T2 ˚कान्); D- T1 G M4 पुण्यांल्लोकान् (for पुण्यलोका) D7 T1 G2-4 M4 व्रजंत्यमी (M4 ति ते), T2 G1 जयति ते (for भवन्ति ते) — D4 repeats 27ᶜ–28ᵇ after 28ᵃᵇ — ᵈ) Dn2 शास्त्र- (for शस्त्र)

28 ᵃ) K1.2 अति स्विष्टि-, Bo अभिविष्ट, D7 T1 G2.3 अतिस्त्व(G2 ˚सु)ष्ट-, T2 अथ स्विष्ट- (for अति स्विष्ट-) K5 V1 B1-5 Da1 D5 5 अति स्विष्ट(B1 ˚भि विष्ट, B5 ˚भिस्विष्ट)मधी(D5 ˚ती)तानां — ᵇ) T2 अपि (for अति) Ś1 K1.2 4 D1 तपस्विन (for ˚स्विनाम्) — After 28ᵃᵇ, D4 repeats 27ᶜ–28ᵇ — K5 om. 28ᶜᵈᵉᶠ. — ᶜ) V1 B5 Da2 अनाशकाग्न्य(B5 ˚स्व)-शिष्टानां, Da1 ˚वशिष्टायां; D7 ˚हिताग्नीनां, S ˚इन्धा हितानां — The portion from 28ᵈ up to 12 108 5ᵃ is lost in D1 on 37 missing fol (103–139) — ᵈ) D4 परेण ते (for परां गतिम्) — After 28ᶜᵈ, K1 m. s V1 B D (except D4 7, D1 missing) read 33ᵃᵇ V1 reads 28ᶜ–33ᵈ on marg — ᵉ) D- T1 G2-4 एष एवात्मनस्त्यागो — ᶠ) K4 D- s धर्मं (for धर्मं) D2 S बुधा (for जना)

29 D1 missing (cf. v l 28) V1 reads 27 on marg — ᵃ) K2 अनानमस्र (for तेभ्यो नमस्र) Da नमस्व; D2 नम त्वं (for नमश्च) G1 भद्रश्च (for भद्रं) Da D- M2 4 ते (for च) — ᵇ) K5 V1 B1.2 Dn D2 . . . s M जुह्वते, T1 (by corr . . . as in text) जिह्वति — ᶜ) D4 ब्रह्मद्विषो K4 D2 नियच्छति, D7 S जिघांसतस् (G2 ˚ति) — ᵈ) K1 m s तेस्तु; K6 नास्ति (for नोऽस्तु) Da तेषा नास्ति सलोकतां, D4 तेषामस्त्विन्द्रलोकता, M1-3 तेषा नास्ति समो भुवि — ᵉ) D7 ब्रह्मलोकं B1 जिता (for ˚जित) D4.- S सर्वान् (for स्वर्ग्यान्) — ᶠ) K4 वीरास्, D5 5 धीरास् (for वीरांस्)

30 D1 missing (cf v l. 28) V1 reads 30 on marg — ᵃ) K4 V1 यथाश्व- K5 D4 मेधावभृथ — ᵇ) K4 भवत्युत — Da om 30ᶜᵈ — ᶜ) K5 V1 B Dn D..s.. s दुष्कृतस्त्र (D5 ˚श्च) प्रणाशश्च (K5 ˚शेन), Cv as in text — ᵈ) K5 Dn1 D2 s . s M2 तत (for तथा) K4 शस्त्रमहा-, Dn2 ˚हतो (for ˚हता)

31 D1 missing (cf. v l 28) V1 reads 31 on marg — ᵃ) Dn2 भवति Bo 2-5 D- 3.5 5 वा (for हि) — ᵇ) D5 धर्मोधर्मकृतोपि च, D- S धर्मो धर्मो भव(M1.5 ˚व)त्युत — ᶜ) K4 D2 कारणा, G1 कारण K5 देशकाल स (for ˚कालस्य) — ᵈ) Da समादृशा (for स तादृशः)

32 D1 missing (cf v l. 28) V1 reads 32 on marg — ᵃ) G4 damaged K4 नर्त्या (for मैत्रा)

C 12.2940
B 12.78.33
K. 12 78. 33

मैत्राः क्रूराणि कुर्वन्तो जयन्ति स्वर्गमुत्तमम् ।
धर्म्याः पापानि कुर्वन्तो गच्छन्ति परमां गतिम् ॥ ३२
ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्न दुष्यति ।
आत्मत्राणे वर्णदोषे दुर्गस्य नियमेषु च ॥ ३३
युधिष्ठिर उवाच ।
अभ्युत्थिते दस्युबले क्षत्रार्थे वर्णसंकरे ।
संप्रमूढेषु वर्णेषु यद्यन्योऽभिभवेद्बली ॥ ३४
ब्राह्मणो यदि वा वैश्यः शूद्रो वा राजसत्तम ।
दस्युभ्योऽथ प्रजा रक्षेद्दण्डं धर्मेण धारयन् ॥ ३५
कार्यं कुर्यान्न वा कुर्यात्संवार्यो वा भवेन्न वा ।
न स शस्त्रं ग्रहीतव्यमन्यत्र क्षत्रबन्धुतः ॥ ३६
भीष्म उवाच ।
अपारे यो भवेत्पारमप्लवे यः प्लवो भवेत् ।
शूद्रो वा यदि वाप्यन्यः सर्वथा मानमर्हति ॥ ३७
यमाश्रित्य नरा राजन्वर्तयेयुर्यथासुखम् ।
अनाथाः पाल्यमाना वै दस्युभिः परिपीडिताः ॥ ३८

---

V1 कर्माणि (for क्रूराणि) B0 D6 कुर्वंति. —$^{b}$) D4 यजति; D5 नयत (for जयन्ति). —$^{c}$) K1 धर्म्ये; K4 D6 धर्म्या. K3 V1 B1 2 Da Dn D4 7 T G कुर्वाणा (for कुर्वन्तो). —$^{d}$) M3 चरमा (for परमां).

33 D1 missing (cf v 1 28) V1 om $33^{ab}$. K1 m. 5 V1 B Da Dn D2 3. 5 6 8 read $33^{ab}$ after $28^{cd}$. —$^{a}$) K1 (first time) ब्राह्मण; D2 (first time) ब्राह्मणां, G1 ब्राह्मणास् Ś1 K2 B1. 2 Dn1 D2 3 4 7 (last seven second time) S लोकेषु; K1 m 5 Da Dn D2 3. 5 6 8 (all first time, but Da D4 3 both times) वर्णेषु (for कालेषु) — After $33^{ab}$, T2 G1 ins

196* आत्मत्राणं च कुर्वाण परान्दस्युभ्य एव च ।

— Dn2 D8 om $33^{cd}$ —$^{c}$) T2 G1 प्रजारक्षो (for आत्मत्राणे) D4 वर्णदोष, D7 T1 G2 3 दस्युदोषे, G4 सर्व° (for वर्ण°) —$^{d}$) K4 5 V1 B1 4 5 Dn1 दुर्दम्य, D6 दुर्दस्य (for दुर्गस्य). D7 S सर्वस्वहरणे तथा

34 D1 missing (cf v 1 28) D8 om the ref —$^{a}$) D7 T1 G3 4 अभ्युद्यते (D7 °त); D8 G2 अभ्युस्थि(G2 °थु)ते. D5 om (hapl) from दस्युबले up to $35^{b}$ T2 G1 क्षत्रबले (for दस्यु°) —$^{b}$) G4 damaged Ś1 K2 4 प्रवृत्ते, K1 सद्वृत्ते; K3 क्षत्रार्थं; D4 त्राणार्थे, M1 क्षतार्थे (for क्षत्रार्थे). —$^{c}$) D4 स (for सं) K3 V1 B2 Da2 G2 सर्वेषु, K5 Da1 Dn D6 M2 क्ष (Da1 क्षे)त्रेषु, B4 लोकेषु (for वर्णेषु) D2 3 8 स मूढेषु च लोकेषु —$^{d}$) K1 D7 T G3 M1 यद(M1 °दा)न्यो, G1 यदस्यो (for यद्यन्यो) K3 Dn1 D4 G2 M1 3 [ऽ]पि; D6 [ऽ]ति-, G1 M2 4 हि (for ऽभि) Ś1 K1, 2, 4 वशी (for बली)

35 D1 missing (cf v 1. 28). D5 om $35^{ab}$ (cf v 1 34). —$^{b}$) K1 G1, 2 राजसत्तमः. —$^{c}$) Ś1 K1, 2 4 न, K3 D4 7 S य (for ऽथ) —$^{d}$) D4 G1 4 दद (for दण्डं) Ś1 K4 D7 T G धारये(K4 °य)त्, K3 D4 पाल(D4 °ल)येत्, B1 वारयन् (for धार°).

36 D1 missing (cf. v 1 28) —$^{a}$) V1 D7 T1 G3 4 वै (for वा). —$^{b}$) Ś1 K1 स कार्यो; K4 B (except B1) D7 T G3 4 स वार्यो; Dn1 न धार्यो; D2 3 स धार्यो, D6 सर्वार्थो, D8 स धान्यो, G1 महार्यो (for संवार्यो) V1 D5 सन्न(D5 न स)धार्यो भवेत्तदा; D4 सवार्या वा भवन्न वा (sic) — Before $36^{cd}$, D7 S ins भीष्म° —$^{c}$) K1 m. 2 3 5 V1 B D (except D4 7, D1 missing) तस्मात्, K4 नास्य (for न स) Cv तस्माच्छस्त्रं गृहीतव्यम्. —$^{d}$) Ś1 K1 2 ब्रह्म (for क्षत्र). K3 -बधव°, D8 -बुध्यत°, T2 बांधवात् (for बन्धुत°) Cv as in text.

37 D1 missing (cf. v. 1 28) D7 8 S om the ref —$^{a}$) K1 अपात्रे; G1 2 अपारो K1 पात्रम् (for पारम्) —$^{b}$) D6 अस्तवे (for अप्लवे) K5 योऽप्लवो भवेत् B2 भवेत्प्लव° (by transp) —$^{c}$) B0 om. यदि वा. D7 T1 G2-4 हि (for [अ]पि) —$^{d}$) K4 सर्वत्र (for सर्वथा)

38 D1 missing (cf v 1 28) —$^{a}$) B1 नरव्याघ्र; M जना राजन् (for नरा रा°) —$^{c}$) Da अनार्या K5 B0-2 4 5 m Dn2 D6 8 परिका(D6 °क)ल्यंतो (B5 orig °ते), V1 परिकल्प्यंते, B3 परिकल्पांता; Da Dn1 परिकल्पतो, D2 3 5 परिजल्पति; D7 S तप्यमानाश्च (for पाल्यमाना वै). D4 मनुत परिकल्पता (sic). —$^{d}$) G4 damaged M1 3 दस्युभ्य°. K1 D3 परिपीडित°.

39 D1 missing (cf v 1 28). —$^{a}$) G4 तमेवं V1 B2 Da Dn D6 T2 G1 M2 पूजयेयुस्ते. —$^{b}$) D7 S (except G1 2) प्रीता —$^{c}$) K1, 2 4 महद्यभीक्ष्ण, K5 V1 B1 2 Da Dn D2, 3 6 अभीरभी(V1 Da °ती)क्ष्ण, D5 T2 G1 M3 महत्य(G1 °रा)भीक्ष्ण, D7 T1 G2-4 महच्च

तमेव पूजयेरंस्ते प्रीत्या स्वमिव बान्धवम् ।
महद्व्यमीक्ष्णं कौरव्य कर्ता सन्मानमर्हति ॥ ३९
किमुक्ष्णावहता कृत्यं किं धेन्वा चाप्यदुग्धया ।
वन्ध्यया भार्यया कोऽर्थः कोऽर्थो राज्ञाप्यरक्षता ॥ ४०
यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
यथा ह्यनेत्रः *शकटः पथि क्षेत्रं यथोषरम् ॥ ४१
एवं ब्रह्मानधीयानं राजा यश्च न रक्षिता ।
न वर्षति च यो मेघः सर्वे एते निरर्थकाः ॥ ४२
नित्यं यस्तु सतो रक्षेदसतश्च निवर्हयेत् ।
स एव राजा कर्तव्यस्तेन सर्वमिदं धृतम् ॥ ४३

C. 12. 2961
B. 12. 78. 44
K. 12. 78. 44

इति श्रीमहाभारते शान्तिपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

(G2 °ह्य)मीष्ट K3 महद्यसुम्न क्षनाथा (sic), D1 महद्वा घ्यासन तीक्ष्ण —K3 om 39d —d) D1 भर्ता, D5 कृती (for कर्ता) K4 V1 Da D2 7 8 समानम् (for सन्मा°)

40 D1 missing (cf. v 1 28) —a) D3 m 8 किमुष्णा K6 B1 D2 5 8 नित्य (for कृत्य) Dn D5 Ca किं सैयं (D6 °यों) नहुहो नोह्या, D3 (orig) किमुग्गावद् (by corr किं वक्त्रावह-, also marg as in text) ता नित्य, D7 किमनड्वा यो न वहेद्, S किमनडुहा यो न वहेन (hypermetric) —b) K (except K1) B D (except D1 7 8, D1 missing) T2 G1 M2 वा (for च) G2 [अ]मुग्धया (for [अ]दु°) —D6 om. 40cd —c) K1 (marg as in text) °कोक्त° —d) K6 G1 M4 (*inf lin*) अरक्षिता, M1 3 4 °रक्षिणा.

41 D1 missing (cf v 1. 28) D6 reads 41 (marg *sec m*) after 42ab, followed by the repetition of 42ab 41ab = 12 37 39ab, Bodhāyana Smṛti 1 1 11ab, (var) Manu 2 157ab 41cd = (var) 12 37 42cd, (var) Manu 2 157cd, (var) Bodhāyana Smṛti 1 1 11cd —c) K1 ह्यनन्न°, K1 m. 6 Bo 3-6 Dn D6 8 ह्यनर्थ°, K3 T2 G1 M ह्यनक्ष , D2 8 5 स्वनर्थ , D4 ह्यनुक्षो, D7 ह्यरक्ष°, T1 G2-4 ह्यदक्ष (for ह्यनेत्र°) Ś1 शठो वा, K1 शेठो वा; K2 3 B4 5 Dn D4 पठो वा, K4 शाठो वा; K5 Bo 8 D2 3. 8 पठो वै; D5 पठो*; D6 पगे वा, D7 S पुरुष° (for *शकटः) V1 B1 2 Da यथा सु(B1 यु)धामय° पद° Ca cites सुधामय —d) K2 3 V1 Bo 6 Dn D6 पार्थ, B4 damaged (for पथि) B1 6 क्षत्र Ca cites पथि क्षेत्र (as in text) K1 यथौदार, K1 m D3 5 यथौख(D5 °स्व)र, K2 4 Da1 D7 T1 G1 4 M4 यथौषर, K5 Dn2 D2 4 8 यथोख(D2 °स्व)र, V1 यथोपर, B1 यथौपध, B4 damaged; Da2 यथाक्षरं (for यथोषरम्) Ca cites औ(Cap ड)पर

42 D1 missing (cf v 1 28) —a) K3 D4 G3 M2 [अ]नधीयानो K6 V1 B Da Dn D2 3 5 6 8 एव विप्रो(Bo °प्रे)नधीया(D8 °दीपा)नो, D7 T G1. 3 4 यथा ब्रह्मानधीयानो; M1 3 4 एव चाप्यनधीयानो —b) K3 V1 B1 2 D2 3 (before corr) 4 5 रक्षति D7 T1 G2-4 M द्विजो राजाप्यरक्षक° (M1-3 °क्षिता, M4 °क्षित), T2 G1 न द्विजो वाप्यरक्षिता —After 42ab, D6 reads 41, followed by the repetition of 42ab —c) K5 Bo 1 3-5 D2 3 5 8 transp वर्षति and च V1 B2 Da Dn D6 7 S मेघो न वर्षते यश्च —d) K5 B Da1 Dn D2 3 5 6 8 सर्वथा ते, V1 Da2 D4 7 S (except M2 4) सर्व एव (for सर्वे एते)

43 Cf. 12 73 1 D1 missing (cf v 1 28) —a) T2 G1 च (for तु) Ś1 K1 सता K4 नित्य यो ह्यसता रक्षेद् —b) Ś1 K1 2 4 असतां Bo 3 5 D2 3 5 8 तु (for च) Some MSS निवर्हयेत्, V1 B2 Da Dn D5 6 निवर्त°, M1 न उहे° (for निवर्ह°) —d) K4 वृत्त; B1 स्मृत, D5 भृतं (for धृतम्)

Colophon D1 missing —*Sub-parvan* Ś1 K V1 B Da Dn D2 7 T G1. 2 4 M राजधर्म —*Adhy name* D7 T1 G3 4 राजलक्षण M1 3 अरक्षकनिंदा; M2 अरक्षनिंदा —*Adhy no* (figures, words or both) K6 Dn 78, B1 76, B3 4 D2 77, Da2 79 (as in text), D7 T G M1 2 4 80, M3 81, —*Śloka no* Dn1 45, Dn2 44,

# ८०

C 12 2962
B 12 9 1
K 12.79 1

युधिष्ठिर उवाच ।
कसमुत्थाः कथंशीला ऋत्विजः स्युः पितामह ।
कथंविधाश्च राजेन्द्र तद्ब्रूहि वदतां वर ॥ १
भीष्म उवाच ।
प्रतिकर्म पुराचार ऋत्विजां स्म विधीयते ।
आदौ छन्दांसि विज्ञाय द्विजानां श्रुतमेव च ॥ २
ये त्वेकरतयो नित्यं धीरा नाप्रियवादिनः ।
परस्परस्य सुहृदः संमताः समदर्शिनः ॥ ३
येष्वानृशंस्यं सत्यं चाप्यहिंसा तप आर्जवम् ।
अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ ४
ह्रीमान्सत्यधृतिर्दान्तो भूतानामविहिंसकः ।
अकामद्वेषसंयुक्तस्त्रिभिः शुक्लैः समन्वितः ॥ ५
अहिंसको ज्ञानतृप्तः स ब्रह्मासनमर्हति ।
एते महर्त्विजस्तात सर्वे मान्या यथातथम् ॥ ६

## 80

☞ $D_1$ is missing for this adhy (cf v l 12 79 28)

1 $D_8$ om the ref —$^a$) $K_1$ कथमुत्था°, $B_1$ कश मस्था, $D_4$ किमुत्थाना, T $G_{1, 3, 4}$ कसमर्था, $G_8$ कथमर्था, Cn कुसुमुत्था (for कसमुत्था°) $D_4$ -शीलो —$^c$) $V_1$ $B_2$ Da यदुक्त चापि राजेंद्र, $B_1$ यदयुक्त च रा°

2 $D_8$ om the ref. $T_1$ $G_8$ om $2^a$–$4^b$ —$^a$) $D_7$ पृथक्, $G_4$ श्रुति (for प्रति) $K_1$ पुराचार, $K_{2\ 3\ 5}$ B Dn $D_{2\ 3\ 5\ 8}$ पराचार°, $V_1$ परीवारे, Da समाचार; $D_4$ शुभाचा*, $D_6$ परीचार, $D_7$ S ($T_1$ $G_8$ om) प(M पु)रो राजन् (for पुराचार) —$^b$) $K_1$ ऋत्विज स्म; $K_8$ $B_1$ $D_4$ $G_1$ °ज स, $D_6$ °जा स्म, $D_7$ वृत्तिरस्य, $T_2$ $G_{2\ 4}$ ऋत्विक्तस्य, M °जस्य (for °जा स्म) —$^c$) $K_5$ $V_1$ B D (except $D_4$, $D_1$ missing) S ($T_1$ $G_8$ om) छद° सामादि ($G_1$ समाधि) (for आदौ छन्दांसि) $G_2$ विज्ञेयो

3 $T_1$ $G_3$ om 3 (cf v l. 2) $V_1$ reads $3^a$–$5^b$ and $D_7$ $3^a$–$4^b$ on marg —$^a$) $K_1$m $_{4\ 5}$ Bo $_{4\ 5}$ $Dn_2$ $D_{2\ 3}$m $_{5\ 8}$ ये त्वेकम($D_5$ °प, $D_8$ °र्मे)तयो, $B_1$ corrupt, $T_2$ (before corr as in text) $G_{2\ 4}$ वेदैकर°, $M_4$ ये त्वकरतये —$^b$) $K_4$ Bo $_{1\ 4\ 5}$ $Da_2$ Dn वीराणा प्रियवादिन°, $Da_1$ $D_{3\ 5\ 6\ 8}$ वी($D_{8\ 5}$ धी)राणा प्रति°, $D_7$ M धीराश्च प्रिय°, $T_2$ $G_1$ धीमत($G_1$ °धारा)श्च प्रियवदा°, $G_{2\ 4}$ धीमत प्रियवादिन° — Da om $3^{cd}$ —$^d$) $K_1$ (*sup lin*) सता च, $K_{2-5}$ $V_1$ B Dn $D_{2-7}$ $T_2$ समतात् ($K_4$ °ता); $D_8$ समत्वात्, $G_1$ समेता (for समता°) $M_2$ सहचेतस (for समदर्शिन)

4 $T_1$ $G_3$ om $4^{ab}$ (cf v l 2) $V_1$ reads 4 and $D_7$ $4^{ab}$ on marg —$^a$) Ś1 $K_{1\ 4}$ येष्टानृशंस्य (for येष्वा°) $K_8$ Bo $_{4\ 5}$ $D_{2-5, 7\ 8}$ $T_2$ $G_{1\ 2}$ आ($B_4$ $D_{2\ 5}$ अ)नृशस्यं सत्यवाक्यम्, $K_5$ $V_1$ $B_{2\ 3}$ Da Dn अ($B_3$ आ)नृशंसा° ($B_3$ $Da_1$ $Dn_2$ °स्या) सत्यवाक्या, $B_1$ अनृशस्यात्सत्यवाद्य° (sic) —$^b$) $K_8$ $D_4$ S अहिंसा दम आर्जवं, $K_5$ $V_1$ $B_{3-5}$ $D_{2\ 3\ 5\ 8}$ अकुसी($B_{3-5}$ °पी)दम थार्जवं ($B_3$ °व°), $B_1$ कुशीलांश्च आर्जव (sic), $B_2$ Da Dn $D_6$ अकुसीदा अथर्जव°; $D_7$ अकुसी सत्यमार्जवं —$^c$) $K_5$ $V_1$ B Da Dn $D_{3\ 5\ 6}$ [ऽ]नभिमानश्च; $D_{4, 7}$ S (except $M_2$) नाति° (for नाभि°) —$^d$) $K_8$ तथा (for दम°) $B_{2\ 5}$ सम° (for शम°) — After 4, $K_5$ $D_8$ ins

197* एतैरेव गुणैर्युक्ता° कार्यास्ते ऋत्विज प्रभो ।

[ $D_8$ सर्वे (for युक्ता) ]

On the other hand, $D_7$ S (except $M_2$) ins after 4

198* यस्मिन्नेतानि दृश्यन्ते स पुरोहित उच्यते ।

5 $V_1$ reads $5^{ab}$ on marg —$^a$) $K_2$ $V_1$ Bo $_3$ Da Dn $D_6$ $T_2$ $G_1$ धीमान् (for ह्रीमान्). $Dn_1$ $D_6$ सत्यव्रती (for °धृतिर्) $D_4$ दाता —$^c$) $K_4$ -स्वेष (for -द्वेष°) $D_8$ -सयुक्तेस् —$^d$) $K_1$ $D_4$ $M_4$ शुक्ले, $K_{3\ 8}$ शुल्कै°, $B_4$ शुक्रै (for शुक्लै°) ❀ Cn त्रिभि° श्रुतवृत्तवंशै° शुक्लैर्निर्दोषै । ❀ $K_2$ समाश्रित°; $D_6$ समतत° (for समन्वित°) Cv as in text

6 $^a$) Bo $_2$ $M_2$ ज्ञानदस° —$^b$) $K_4$ च ब्राह्मणम्, $M_2$ ब्राह्मासनम् (for ब्रह्मा°) —$^c$) $K_1$ महौजसस् (for महर्त्विजस्) $D_8$ तात —$^d$) $D_{7\ 8}$ $T_1$ सर्व (for सर्वे) Bo मन्या $K_5$ $V_1$ B D (except $D_{4\ 7}$, $D_1$ missing) यथार्हत° (for °तथम्)

7 $D_8$ om the ref —$^a$) $Dn_1$ देवयजन (for वेद

युधिष्ठिर उवाच ।

यदिदं वेदवचनं दक्षिणासु विधीयते ।
इदं देयमिदं देयं न क्वचिद्व्यवतिष्ठते ॥ ७
नेदं प्रति धनं शास्त्रमापद्धर्ममशास्त्रतः ।
आज्ञा शास्त्रस्य घोरेयं न शक्तिं समवेक्षते ॥ ८
श्रद्धामारभ्य यष्टव्यमित्येषा वैदिकी श्रुतिः ।
मिथ्योपेतस्य यज्ञस्य किमु श्रद्धा करिष्यति ॥ ९

भीष्म उवाच ।

न वेदानां परिभवान्न शाठ्येन न मायया ।
कश्चिन्महदवाप्नोति मा ते भूद्बुद्धिरीदृशी ॥ १०
यज्ञाङ्गं दक्षिणास्तात वेदानां परिबृंहणम् ।
न मन्त्रा दक्षिणाहीनास्तारयन्ति कथंचन ॥ ११
शक्तिस्तु पूर्णपात्रेण संमितानवमा भवेत् ।
अवश्यं तात यष्टव्यं त्रिभिर्वर्णैर्यथाविधि ॥ १२
सोमो राजा ब्राह्मणानामित्येषा वैदिकी श्रुतिः ।
तं च विक्रेतुमिच्छन्ति न वृथा वृत्तिरिष्यते ।
तेन क्रीतेन धर्मेण ततो यज्ञः प्रतायते ॥ १३
इत्येवं धर्मतः ख्यातमृषिभिर्धर्मवादिभिः ।
पुमान्यज्ञश्च सोमश्च न्यायवृत्तो यथा भवेत् ।
अन्यायवृत्तः पुरुषो न परस्य न चात्मनः ॥ १४
शरीरं यज्ञपात्राणि इत्येषा श्रूयते श्रुतिः ।
तानि सम्यक्प्रणीतानि ब्राह्मणाना महात्मनाम् ॥ १५

C 12 2977
B 12 79 16
K 12 79 16

वचनं ) —$^{b}$) V1 Bo 1 दक्षिणास्व( B4 °णा ते )भिधी॰ यते —$^{d}$) D4 T2 व्यति( T2 °व )तिष्ठति

8 $^{a}$) D7 T G देयं ( for नेद ) D8 शास्त्रम् Cv as in text —$^{b}$) K1 D4 7 S ( G3 damaged ) आ ( M4 मो )पद्धर्मा ( D7 T G1-3 M °र्मो ) न शास्त्र°, K2-5 V1 Bo 2 8 Dn D5 आपद्धर्मानुशास्त्र( K3 °सार )त°, B1.4.6 D8 °द्धर्माश्च ( B1 °स्त्र , B4 °र्थे ) शास्त्रत°, D1 दुश्चर्य°, D2 3 5 °द्धर्मोनु°, text as in Ś1 only —$^{c}$) G1 अज्ञा —$^{d}$) M4 शक्ति°. K1 D6 समवेक्ष्यते, K3 समुपेक्षते

9 $^{a}$) D7 S आलभ्य ( for आरभ्य ) K5 V1 B Da Dn D2 3 6 8 श्रद्धावता हि ( V1 B2 Da Dn D8 च ) यष्टव्यम् —$^{b}$) D7 S इती( G1 °ति )य ( for इत्येषा ) D4 वैदिकीं B1 स्मृति° ( for श्रुति° ) —$^{c}$) Cv as in text —$^{d}$) K3 किं च, B4 D2 8 किं नु, D4 किं वा ; D5 किं तु K3 [अ]श्रद्धा T2 G1 भविष्यामि ( for करिष्यति )

10 $^{a}$) D7 T1 G2-4 देवाना ( for वेदाना ) Cv as in text —$^{b}$) D2 नाशाठ्येन, D. न साध्येन, D6 न शयेन, G1 अशाठ्येन ( for न शा° ) D6 om न K4 न शाठ्ये नममायया ( sic ) —$^{c}$) G4 damaged D7 क्वचित्; G1 कश्चित् ( for कश्चित् ) —$^{d}$) K4 मति , D6 सा ते ( for मा ते )

11 $^{a}$) K1 D2 यज्ञाग , D. यज्ञे च; D7 T1 G यज्ञाना B1.8 Da1 Dn1 D2 6 T2 G1 M2 दक्षिणा —$^{b}$) V1 देवाना; D7 S ( except G2 ) मन्त्राणा ( for वेदाना ) G2 8 परिबर्हण —$^{c}$) K6 V1 B D ( except D1 7 , D1 missing ) M2 यज्ञा ( for मन्त्रा )

12 $^{a}$) K1 पूर्णमात्रेण Cv as in text —$^{b}$) K1.4 D4 स( K1 म )स्मिता न च ( K1m स ) मा भवेत्, K2 3 5 V1 B Da Dn D2 3 6 8 संमिता नयमा म°, T1 G2 °ता नावमा म° Cv as in text —$^{d}$) D7 S यथाबल ( for °विधि )

13 $^{a}$) Ś1 समो K3 D4 द्विजातीनाम् ( for ब्राह्मणानाम् ) Cv as in text —$^{b}$) M4 इत्येषां V1 B1 Da Dn D6 स्थिति° ( for श्रुति° ) —$^{c}$) K4 ते ( for तं ) K3 न, B4 तु ( for च ) Ś1 K1 2 4 विक्रीतुम् Cv as in text —$^{d}$) D7 S तथा ( for वृथा ) K3 इष्यति Cv as in text —$^{e}$) V1 यज्ञेन, Da lacuna, G1 कृतेन ( for क्रीतेन ) K6 B D ( except D1 7, D1 missing ) यज्ञेन ( for धर्मेण ) Cv as in text —$^{f}$) D4 यज्ञा , G1 यज्ञ K1.5 B1 D2 6 T2 प्रजायते, K4 V1 Bo 5 Dn2 D2 3 5 प्रती°, D7 T1 G प्रवर्तते ( for प्रतायते )

14 $^{a}$) T2 G1 [ए]तद् ( for [ए]व ) K5 V1 B Da Dn D2 3 5 6 8 धर्मतो ख्यातम्, D7 S धर्ममाख्यातम् ( for °त° ख्यातम् ) —$^{b}$) K5 V1 B Da Dn D2 3 5 6 8 धर्म( B1 ब्रह्म )चारिभि°, D7 S °कोविदै° ( for °वादिभि ) —$^{d}$) K2 8 B2 Da Dn D1 6 7 S यद्वा ( for यथा ) —$^{f}$) G4 damaged D8 चात्मभि°

15 $^{a}$) K5 B D2 3 5 8 शरीरवृत्तिमास्थाय, V1 Da Dn D6 शारीर ( Da2 Dn2 D8 शारीर, Dn1 शरीर- ) वृत्तमास्थाय, Cv as in text —$^{b}$) Bo 4 6 D8

C 12. 2978 B. 12. 79. 17 K 12. 79. 17

तपो यज्ञादपि श्रेष्ठमित्येषा परमा श्रुतिः ।
तत्ते तपः प्रवक्ष्यामि विद्वंस्तदपि मे शृणु ॥ १६
अहिंसा सत्यवचनमानृशंस्यं दमो घृणा ।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ १७
अप्रामाण्यं च वेदानां शास्त्राणां चातिलङ्घनम् ।
अव्यवस्था च सर्वत्र तद्वै नाशनमात्मनः ॥ १८
निबोध दशहोतॄणां विधानं पार्थ यादृशम् ।
चित्तिः स्रुक्चित्तमाज्यं च पवित्रं ज्ञानमुत्तमम् ॥ १९
सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम् ।
एतावाञ्ज्ञानविषयः किं प्रलापः करिष्यति ॥ २०

इति श्रीमहाभारते शान्तिपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

# ८१

युधिष्ठिर उवाच ।
यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
पुरुषेणासहायेन किमु राज्यं पितामह ॥ १
किंशीलः किंसमाचारो राज्ञोऽर्थसचिवो भवेत् ।

---

वैदिकी (for श्रूयते) — D8 G2 om. (hapl) 15c–16b — c) K2 4 5 V1 B (except B1 2) D (except D7, D1 missing) M2 4 नाति (for तानि) Cv as in text

16 D8 G2 om 16ab (of v l 15) — a) D4 तपा G1 यज्ञादिभि (for °दपि) — c) K1 तत (for तप) — d) K4 विद्वास.

17 a) Ś1 K1 4 अहिंसा सत्यमस्तेयम् — b) Dn2 आनृशंसं V1 B1–5 Da तथा; B0 तपो (for दमो) — c) D4 तपा Dn2 यदुर् (for विदुर्) Ś1 K1 4 V1 Da Dn2 D4 वीरा; D7 T G विप्रा (for धीरा).

18 a) K8 B0 D8 M1 3 4 अप्रमाण्य (K8 °ण) — b) K8 B0 चापि; K5 B2–5 D (except D7, D1 missing) चाभि (for चाति).

19 Cf Taittirīya Āraṇyaka 3 1 1 Before 19, B2 ins श्रीहरि शरणम्. M2 om 19ab. — a) Ś1 K1 4 देव (for दश-) — b) B0 lacuna, Da पथि (for पार्थ) D6 याभृर्श — c) Ś1 K V1 B0 Da D2–5 M2–4 वित्त (M2 °त्त), B1–5 D6 8 वित्त; G4 damaged, M1 चित्र (for चित्ति). K4 स्रुक्चितम्, V1 B0 श्रुक्चि (V1 °क्ति)त्तम्; B1 रक्षितुम्, D6 M2 4 स्रुक्तित्तम् K4 माज्ये — After 19, D7 S ins

199* न शाठ्यं न च जिह्मत्वं कालो देशश्च ते दश ।

[D7 T1 जिह्मत्व. Cv न सृष्टत्व न जिह्मत्व (for the prior half). M2 देश कालः (by transp) M1 3 काल (for कालो). Cv कालं देश च ते तथा (for the post half)]

20 = B 14. 11. 4 — a) T1 G4 सर्वे (for सर्वं) D7 मृत्युरूपम् — b) G1 (before corr) 3 ब्राह्मण; M1 3 4 ब्राह्मण (M4 °णा). M2 पर (for पदम्) — c) Ś1 K1 ज्ञानविषय; G3 (inf lin as in text) ब्रह्मविषय.

Colophon D1 missing —*Sub parvan* Ś1 K V1 B D (except D8, D1 missing) T G1 2 M राजधर्म —*Adhy name* D7 T1 G3 4 यज्ञस्तुति, M1–3 अन्यायप्र(M2 om प्र)वृत्तिनिंदा —*Adhy no* (figures, words or both): K5 D7 S 81, B1 77, B3 4 D2m 78, Da1 80 (as in text), Dn 79, D8 76 —*Śloka no.*. Dn1 21, D8 20

## 81

☞ D1 is missing for this adhy (cf. v l 12. 79 28)

1 Cf Manu 7 55, Śukranītisāra 2 1. — D8 om the ref — a) B1 यद्यद्, M1 3 यद्यपि (for यदपि) Ś1 K1 4 [अ]ल्पफल (for °तर). — c) M2 सहायेन (for [अ]स°). — d) K1 किं नु; D4 किं सु- (for किमु) K2 4 राज्ये, K6 V1 B (except B2) D (except D7, D1 missing) राज्ञा (for राज्यं).

2 a) K1 किं शीलं; D3 lacuna K4 किंसदाचारो (for किंसमा°) — b) D4 राज्ञा; D6 यज्ञो. K1 [s]र्थे; K8 स, K4 5 V1 B Da Dn D2–6 8 [s]थ; D7 T1 G2–4 य (for ऽर्थ) Ś1 K1 -सदृशो; D4 सचिवा — K8 om. (hapl) 2cd — c) K1 कीदृशं, M1

कीदृशे विश्वसेद्राजा कीदृशे नापि विश्वसेत् ॥ २

भीष्म उवाच ।

चतुर्विधानि मित्राणि राज्ञां राजन्भवन्त्युत ।
सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ॥ ३
धर्मात्मा पञ्चमं मित्रं स तु नैकस्य न द्वयोः ।
यतो धर्मस्ततो वा स्यान्मध्यस्थो वा ततो भवेत् ॥ ४
यस्तस्यार्थो न रोचेत न तं तस्य प्रकाशयेत् ।
धर्माधर्मेण राजानश्चरन्ति विजिगीषवः ॥ ५
चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शङ्क्यौ तथापरौ ।
सर्वे नित्यं शङ्कितव्याः प्रत्यक्षं कार्यमात्मनः ॥ ६
न हि राज्ञा प्रमादो वै कर्तव्यो मित्ररक्षणे ।
प्रमादिनं हि राजानं लोकाः परिभवन्त्युत ॥ ७
असाधुः साधुतामेति साधुर्भवति दारुणः ।
अरिश्च मित्रं भवति मित्रं चापि प्रदुष्यति ॥ ८
अनित्यचित्तः पुरुषस्तस्मिन्को जातु विश्वसेत् ।
तस्मात्प्रधानं यत्कार्यं प्रत्यक्षं तत्समाचरेत् ॥ ९
एकान्तेन हि विश्वासः कृत्स्नो धर्मार्थनाशकः ।
अविश्वासश्च सर्वत्र मृत्युना न विशिष्यते ॥ १०
अकालमृत्युर्विश्वासो विश्वसन्हि विपद्यते ।
यस्मिन्करोति विश्वासमिच्छतस्तस्य जीवति ॥ ११

C 12. 2993
B 12. 80 11
K 12. 80 12

---

कीदृशेद् D4 विश्वसेत्कीदृशे राजा —d) K1 कीदृश K3 5 V1 B3 Da Dn D6 8 न च, Bo-2 4 5 D2 3 5 च न, D4 [ऽ]थ न, D7 S वा न (for नापि) Ś1 K1 चाश्वसेत् (for विश्व°)

3 D3 om the ref —a) G3 damaged G1 चतुर्वियानि (for °र्विधानि) —b) K4 M4 राज्ञा —c) K1 सहाया भजमानाश्च Cv as in text —d) B1 क्षत्रियस् (for कृत्रिमस्) K1 सहजा कृत्रिमास्तथा

4 a) K1 पचमे, K5 V1 B Da Dn D2 3 5 6 8 पचमाह्र, D4 सहजं (for पञ्चम) K1 मित्रे, B2 Da Dn चापि, M2 4 मित्र° (for मित्र) D6 धर्मार्थापचमश्चापि —b) K1 न तु, B2 Da Dn D6 मित्र, T2 ननु (for स तु) V1 B2 M1. 3 तद्वयो (for न द्वयो) — D6 reads $4^{e}$–$5^{d}$ on marg —c) D4 वास्य (for वा स्यान्) Cv as in text —d) K2 5 V1 B Da Dn D2 3 5 6 8 G2 4 M1 धर्मस्थो, D4 समस्थो, G1 मध्यतो (for मध्यस्थो)

5 D6 reads 5 on marg —a) K1. 2 त्वस्यार्थो, D4 त्वस्यार्थो, D7 T G यस्यार्थो (for त°) —b) G3 damaged V1 B1 3 4 Da D2 3 5 8 G2 तत्, Bo तु (for त) V1 प्रकाशते (for °येत्) — After $5^{ab}$, D7 S ins

200* मित्राणा प्रकृतिर्नास्ति त्वमित्राणां च भारत ।
उपकाराद्भवेन्मित्रमपकाराद्भवेदरि ।
यस्यैव हि मनुष्यस्य नरो मरणमिच्छति ।
तस्य पर्यागते काले पुनर्जीवितमिच्छति ।

—c) D3 5 धर्माधर्मे न D7 राजान; T2 राजेंद्र (for राजानश्) Cv as in text —d) K6 D4 विजयैषिण ; V1 Da [इ]ह (V1 °वि) जिगीषव (for विजिगी°)

6 b) G1. 2 M2 Cv शक्यौ (for शङ्क्यौ) Ś1 K1 तथावरौ; D4 तथापरे, M4 यथा परौ (for तथापरौ) K4 5 Bo 3-5 D2 3 5 8 नित्य शकेत चा (K4 °त वा; K5 °त मा, D8 °न चा) परौ, B1 Da नित्यल (Da1 °द, Da2 °श) क्षौ तथापरौ —d) K1 प्रतीक्ष्य, M4 प्रत्यक्ष° (for प्रत्यक्ष)

7 a) M2 राज्ञ° —b) Da कर्तव्यं K2 मित्र लक्षणे (for °रक्षणे) —c) D6 प्रमायिन, G1 °दिद (for °दिन) —d) K1. 4 M4 लोक° (K4 °का) परिभवत्युत

8 a) G4 damaged D3 साधुनाम् (for °ताम्) —b) K1 साधु —c) D7 T1 G3 4 तु (for च) —d) D6 क्षिप्रं (for चापि) K5 D2 3 5 8 M2 प्रदुष्यते, G1 प्रदूष्यति (for प्रदु°)

9 a) B1 -वृत्त°, D6 -वित्त°, D8 चित्तं; G1 -चित्त (for -चित्त°) Cv as in text —b) K3 D4 M1 3 जातु न (for को जातु) —c) K5 Bo 5 D2 8 M2 यस्मात् (for तस्मात्) K1 (sup lin as in text) प्रदानं, K3 प्रमाणं; D4 प्रणाम (for प्रधान) D3 तत् (for यत्) G1 कायात् (for कार्यं) —d) D4 G1 यत् (for तत्) Cv cites एकान्तेन

10 a) M2 विश्वासं —b) K1 (before corr) कृतो, K3 कृत्स्ना, D2 कृष्णो; D7 T G कृत्स्न, M2 कृत्स्ने (for कृत्स्नो) G4 M2 -नाशन° (for -नाशक°) —d) K4 मन्युना (for मृत्युना) K1 वा, K3 B3 Dn D2 6 च; K4 तु; K5 V1 Bo-2 4 5 Da D3-5 7 8 T G [अ]पि (for न)

11 a) K1 4 Dn1 D5 M2 मृत्यु (for मृत्युर्) K4

C. 12 2994
B 12 80 12
K 12.80 13

तस्माद्विश्वसितव्यं च शङ्कितव्यं च केषुचित् ।
एषा नीतिगतिस्तात लक्ष्मीश्चैव सनातनी ॥ १२
यं मन्येत ममाभावादिममर्थागमः स्पृशेत् ।
नित्यं तस्माच्छङ्कितव्यममित्रं तं विदुर्बुधाः ॥ १३
यस्य क्षेत्रादप्युदकं क्षेत्रमन्यस्य गच्छति ।
न तत्रानिच्छतस्तस्य भिद्येरन्सर्वसेतवः ॥ १४
तथैवात्युदकाद्भीतस्तस्य भेदनमिच्छति ।
यमेवंलक्षणं विद्यात्तममित्रं विनिर्दिशेत् ॥ १५

यः समृद्ध्या न तुष्येत क्षये दीनतरो भवेत् ।
एतदुत्तममित्रस्य निमित्तमभिचक्षते ॥ १६
यं मन्येत ममाभावादस्याभावो भवेदिति ।
तस्मिन्कुर्वीत विश्वासं यथा पितरि वै तथा ॥ १७
तं शक्त्या वर्धमानश्च सर्वतः परिबृंहयेत् ।
नित्यं क्षताद्वारयति यो धर्मेष्वपि कर्मसु ॥ १८
क्षताद्भीतं विजानीयादुत्तमं मित्रलक्षणम् ।
ये तस्य क्षतमिच्छन्ति ते तस्य रिपवः स्मृताः ॥ १९

---

lacuna, D5 विश्वासे —$^{b}$) K1 विश्वास, D4 विश्वासे (for विश्वसन्) V1 हि पद्यते (for चिप°) —$^{c}$) M- [अ]विश्वासस् (for विश्वा°) —$^{d}$) K1 B2 4 Da1 D4 Cv इच्छतस् (for इच्छ°)

12 $^{c}$) Ś1 K4 D2-4, 7 T1 G3 4 नीतिर् (for नीति) K4 गतीस् B1 D4 चैव, M1 8 चापि, M2 तत्र (for तात) D2 राजनीतिस्तात एषा —$^{d}$) K6 Dn लक्ष्या, B3-5 D3 5 6 लक्ष्याश्, D2 लक्ष्यांश्, D7 लक्ष्मी; D5 लक्ष्म्या, M1 लक्ष्मीं (for लक्ष्मीश्) K4 D7 S (except G2) चैषा; B1 2 तात (for चैव) Ś1 K1 D2 4 सना सना (D2 °नि)

13 $^{a}$) D8 यन् (for यं). D4 पश्येत (for मन्येत) K1 ममाभावाद्, D6 मया°; D7 महा°, G2 महाभागान् (for ममाभावाद्). G1 य मन्ये देवमनिशम् —$^{b}$) D7 S (except M1) एनम् (for इमम्) K3 Dn अर्थागमं (for °गम). —$^{c}$) K1 (*sup lin*) D8 नित्यं यस्मात्; D7 तस्मान्नित्यं (by transp). —$^{d}$) K6 Dn D6 अमित्रं तद्; D7 T G1 3 4 तममित्रं (by transp), G2 M1 3, 4 न तन्मित्रं.

14 $^{a}$) D2 क्षत्राद् D4 क्षेत्रमस्योदकं राजन्; D7 S क्षेत्राद्यस्योदक पार्थ. —$^{b}$) B2 D2 क्षत्रम् (for क्षेत्रम्) K1 अन्य च, Da T2 अन्यत्र (for अन्यस्य). —$^{c}$) Ś1 K1 4 सर्वत्र, D7 T G M2 4 न तस्य, M1 3 न चास्य (for न तत्र) Ś1 (*sup lin*) [अ]णिच्छतस्, M1 निच्छितस् (for [अ]निच्छतस्). B0 3-5 D2 3 5 तत्रा नियच्छ (B3-5 °गैच्छ, D5 °यष्ट) तस्तस्य —$^{d}$) K3 विद्येरन्; B1 तिष्ठेरन्; Da1 भिंदेरन्; D2 [अ]भिद्येरन् (for भिद्ये°)

15 $^{a}$) Ś1 K1, 2 B1 [अ]प्युदकाद्, B2 Da [अ]म्यु°, D4 [अ]म्युदयाद् (for [अ]त्युदकाद्). D2 3 हीनस् (for भीतस्) —$^{c}$) M2 एव (for एवं-). K3 लक्षणा (for लक्षणं). D6 विंद्यात्; D7 T1 G3 4 M1, 3 विद्यम्, T2 M2 विद्वस्; G1 विद्वास्, M1 विश्वेस् (for विद्यात्) Cv as in text —$^{d}$) D7 T G1 3 4 M विदुर्बुधा (for विनिर्दिशेत्) G2 त मित्र विविदुर्बुधा°, Cv तममित्र विदुर्बुधा°.

16 $^{a}$) K5 V1 B0-2 5 D6 यस्य वृद्ध्या, B3 Da Dn1 D2, 3 5 यस्तु वृद्ध्या, B4 य स वृद्ध्या; Dn2 यश्च वृद्ध्या, D8 यस्तु विद्ध्या (for य समृद्ध्या) K5 तु, D6 8 तु (for न). K1 हृष्येत; K3-5 Dn2 D4 M1 3 4 तप्येत; V1 B0 2-5 Da Dn1 D2 3 5-7 T G M2 तृप्येत; B1 मृष्येत; D8 नृष्येत (for तुष्येत). —$^{b}$) G1, 3 क्षयो (for क्षये) —$^{c}$) M1 3 एवम् (for एतद्) Cnp एतदुक्तम्. Ś1 K1 4 G2 M2-4 उत्तम मित्रस्य (for उत्तम°) —$^{d}$) G1 न मित्रम् (for निमित्तम्). K5 V1 B Da Dn D5 6 8 इति; D2 3 अति (for अभि). B1 -चक्ष्यते, D6 -चक्ष्यते (for -चक्षते). K3 D4 लक्षण समदृश्यते

17 $^{a}$) K2 3 B1 Da Dn D3 5 6 8 G2 M2 यन्; D4 यो, T2 ये (for यं) G1 यन्मन्येपि महाभावा —$^{b}$) G1 corrupt. —$^{d}$) = $24^{d}$. B1 G1 (*sup lin* as in text) सदा (for तथा)

18 B1 om (hapl) $18^{a}$–$24^{d}$ —$^{a}$) D6 तथा (hypermetric) (for त) D2 शक्ता (for शक्त्या) Ś1 K1 4 वर्धमानस्तु, Da1 °मानस्य; D7 T1 G2-4 M °मान च (for °मानश्च) —$^{b}$) D5 परिवृधयेत् (for °बृंहयेत्). —$^{c}$) K1 क्षयांताद् (hypermetric) (for क्षताद्) D7 T1 G M1, 3 धारयति; T2 सारयति (for वार°). —$^{d}$) K1 M1 3 4 धर्म्येषु (for धर्मेषु). V1 धर्मेषु (for कर्मसु).

19 B1 om. 19 (cf. v l 18) —$^{a}$) K1 कृपाद्भीत, Da कृतार्थं तं; D7 T1 G1, 3 4 क्षयाद्भीत (for क्षता°). G1 न (for वि) —$^{b}$) K1 अतुल, T2 G1 उक्त तन्

व्यसनान्नित्यभीतोऽसौ समृद्ध्यामेव तृप्यते ।
यत्स्यादेवंविधं मित्रं तदात्मसममुच्यते ॥ २०
रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः ।
कुलीनः शीलसंपन्नः स ते स्यात्प्रत्यनन्तरः ॥ २१
मेधावी स्मृतिमान्दक्षः प्रकृत्या चानृशंसवान् ।
यो मानितोऽमानितो वा न संदुष्येत्कदाचन ॥ २२
ऋत्विग्वा यदि वाचार्यः सखा वात्यन्तसंस्तुतः ।
गृहे वसेदमात्यस्ते यः स्यात्परमपूजितः ॥ २३
स ते विद्यात्परं मन्त्रं प्रकृतिं चार्थधर्मयोः ।
विश्वासस्ते भवेत्तत्र यथा पितरि वै तथा ॥ २४
नैव द्वौ न त्रयः कार्या न मृष्येरन्परस्परम् ।
एकार्थादेव भूतानां भेदो भवति सर्वदा ॥ २५
कीर्तिप्रधानो यश्च स्याद्यश्च स्यात्समये स्थितः ।
समर्थान्यश्च न द्वेष्टि समर्थान्कुरुते च यः ॥ २६
यो न कामाद्भयाल्लोभात्क्रोधाद्वा धर्ममुत्सृजेत् ।
दक्षः पर्याप्तवचनः स ते स्यात्प्रत्यनन्तरः ॥ २७
शूरश्चार्यश्च विद्वांश्च प्रतिपत्तिविशारदः ।
कुलीनः शीलसंपन्नस्तितिक्षुरनसूयकः ॥ २८

C 12. 3010
B 12. 80. 28
K 12. 80. 29

---

(for उत्तम) K1 धर्मं (for मित्र) Ś1 D4 रक्षण (for -रक्षणम्) —$^c$) D4 8 य D7 T G यस्य (for तस्य) D7 T1 G1 3 4 M1. 3 4 क्षयम् (for क्षतम्) —$^d$) K3 तथा, D2 स्मृत (for स्मृता)

20 B1 om. 20 (cf v l 18) —$^a$) T2 G1 M1. 3. 4 व्यसने (for °नान्) K1. 2 D4 मे, K3-5 V1 B (B1 om) Da Dn D2 3 5 6 8 य, D7 S वै (for ऽसौ) —$^b$) K2 तप्यते (for तृप्यते) K1 समृद्ध्या नानुतप्यते, K3 D4 °द्ध्यापि न तप्यते, K4 V1 B (B1 om) Dn D2 3 5 8 °द्ध्या यो न (K4 च) तप्यते, K5 Dn D6 °द्ध्या यो न दुष्यति, D7 S °द्ध्या च न (D7 T2 G2 3 न च) तृप्यति (G1 तृप्यते, M तप्यते) —$^c$) D7 T G2-4 M य स्याद्, G1 यस्माद् (for यत्स्याद्) D8 मत्र (for मित्र) —$^d$) T2 G1 तदसन्मित्रमुच्यते

21 B1 om 21 (cf v l 18) —$^b$) = 28$^d$ —$^c$) = 28$^c$ M1 कुशील (for कुलीन) Dn D6 कुल (for शील) —$^d$) K2 3 6 V1 B (B1 om.) D (except D4 7, D1 missing) स तस्मात्, K4 G1 सत्ये स्यात् (for स ते स्यात्) K4 प्रत्यनतरं, Cv °र (as in text)

22 B1 om 22 (cf v l 18) —$^b$) K8 V1 Dn D6 M4 चानृशस्यवान् (for °सवान्) — D8 om 22$^c$-23$^b$ —$^c$) T2 [ऽ]मानित्य वै, G1 वा मित्र वै, M1 8 [ऽ]वमानितो (for ऽमानितो वा) —$^d$) K1 D4 संहृष्येत्; K3 6 V1 B (B1 om.) Dn D2 3 5 6 M4 च दुष्येत्, Da च द्वेष्येत्, D7 T1 G सतुष्येत्, T2 च तुष्येत्, M1-3 स दुष्येत् (for संदू°) K8 D4. 7 S कथचन; K4 कदाचन (for °चन)

23 B1 om 23 (cf v l. 18), D8 om 23$^{ab}$ (cf v l 22) —$^b$) B2 वा योध, Dn1 वास सु; D2 3 5 चोत्तम (for वात्यन्त) D7 T G सत्कृत, M1 3 4 -पूजित (for संस्तुत) —$^d$) All MSS (except Ś1 K1 4, B1 om, D1 missing) स (for य)

24 B1 om 24 (cf v l 18) —$^a$) K8 सत्यं; D4 स त (for स ते) D2 4 मित्र (for मन्त्रं) D7 T1 G सविद्या प(G1 °द्य प; G2 3 °द्यात्प)रमं मित्रं —$^b$) D4 G1 प्रकृत (for °तिं) —$^c$) K8 V1 Da पुत्र (for तत्र) —$^d$) = 17$^d$

25 $^a$) D6 कार्ये (for कार्या) —$^b$) Ś1 K1 2 4 मिश्रेरन्, K8 मृश्येयु, D4 मृष्येयु (for °रन्) —$^c$) K6 V1 B0 3-5 Da Dn D6 8 एकार्थे ह्येव, B1 °र्थेत्वेव, D2 3 5 एकाते ह्येव, D4 एकार्थे तेव, D7 G2 3 °र्थहेतु; T1 G4 °र्थमिह, M2 °स्यादिह (for °र्थादेव) T2 G1 M1 3 4 इह (for एव) —$^d$) Ś1 K1. 2 4 सर्वथा, G2 सर्वत (for सर्वदा)

26 $^a$) D2 G1 कीर्ति (for कीर्ति) D8 -प्रधाने K5 V1 B0 4 5 Da Dn D6 8 तु स्याद्, B1 तस्माद् (for च स्याद्) —$^b$) B1 तु (for च) D4 समय (for समये) —$^c$) D5 7 T1 G3 4 समर्थोन्यां(D6 °न्य)-श्च न द्वेष्टि —$^d$) K4 5 V1 B Da Dn D2 3 5 6 8 नानर्थान् (for सम°)

27 $^a$) D4 या, D7 ये (for यो) Ś1 K1 4 मोहाद्, D7 G2 3 क्रोधाद् (for लोभाद्) —$^b$) D7 G2 3 लोभाद्, G4 भयाद् (for क्रोधाद्) —$^d$) T2 G1 M4 सत्ये (for स ते)

28 K4 om. 28$^{ab}$ K6 V1 B Da Dn D2 3 5 6 8 transp 28$^{ab}$ and 28$^{cd}$ —$^a$) D4 शूराश्चार्याश्च विद्वांस —$^c$) = 21$^c$ D4 कुलीना शीलसंपन्नास् —$^d$) = 21$^b$ K5 V1 B Da2 Dn D2 3 5 6 8 अविकत्थन, Da1 इव कश्चन (for अनसूयक) D4 तितिक्षतोनसूयव

C 12 3011
B 12. 80 29
K. 12 80 30

एते ह्यमात्याः कर्तव्याः सर्वकर्मस्ववस्थिताः ।
पूजिताः संविभक्ताश्च सुसहायाः स्वनुष्ठिताः ॥ २९
कृत्स्नमेते विनिक्षिप्ताः प्रतिरूपेषु कर्मसु ।
युक्ता महत्सु कार्येषु श्रेयांस्युत्पादयन्ति च ॥ ३०
एते कर्माणि कुर्वन्ति स्पर्धमाना मिथः सदा ।
अनुतिष्ठन्ति चैवार्थानाचक्षाणाः परस्परम् ॥ ३१
ज्ञातिभ्यश्चैव बिभ्येथा मृत्योरिव यतः सदा ।
उपराजेव राजर्धिं ज्ञातिर्न सहते सदा ॥ ३२
ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः ।
नान्यो ज्ञातेर्महाबाहो विनाशमभिनन्दति ॥ ३३
अज्ञातिता नातिसुखा नावज्ञेयास्त्वतः परम् ।
अज्ञातिमन्तं पुरुषं परे परिभवन्त्युत ॥ ३४
निकृतस्य नरैरन्यैर्ज्ञातिरेव परायणम् ।
नान्यैर्निकारं सहते ज्ञातेर्ज्ञातिः कदाचन ॥ ३५
आत्मानमेव जानाति निकृतं बान्धवैरपि ।
तेषु सन्ति गुणाश्चैव नैर्गुण्यं तेषु लक्ष्यते ॥ ३६
नाज्ञातिरनुगृह्णाति नाज्ञातिर्दिग्धमस्यति ।
उभयं ज्ञातिलोकेषु दृश्यते साध्वसाधु च ॥ ३७

---

29 a) K4 स्वमात्या ; D5 समात्या° (for ह्य°) — b) K1 अवस्थित° ; B0 4 5 D3–6 8 व्य(D6 °प्व) वस्थिता. — d) V1 स , B2 4 D3. 5 स्व ; G1 M4 स्यु (for सु-) K1 स्वनुष्ठित , D4 सुनिष्ठिता (for स्वनु°)

30 a) B1 कृत्स्नेस्वेते ; D4 कृत्स्नामेषे V1 D4 विनि° क्षिप्ता. — d) K2 4 श्रेयो हि (for श्रेयांसि) V1 B2 Da Dn D4 6 [उ]त्थापयति (for [उ]त्पाद°) K3 B1 3 Da Dn D4 6 S [उ]त (for च) Ś1 श्रेयोभ्योत्पादयति च ; K1 श्रेयोस्यापा° ; D7 श्रेयान्स्यात्पादयंत्युत (sic)

31 b) B5 वर्धमाना (for स्पर्ध°) Da परस्परं (for मिथ सदा) — c) D4 अनुतिष्ठति K2 3 5 V1 B D (except D4, D1 missing) चैवार्थम् (for °र्थान्) — d) B1 आचक्ष्माणा°, D4 आवेक्षति, D7 T1 G2 3 अ(T1 G2 आ)तिष्ठत°, T2 G1 4 M1 3 4 -आचक्षत°, M2 अवक्ष्यंति (for आचक्षाणा°)

32 a) K4 ज्ञातिभिश्च K1 विध्येथा, K3 5 V1 B Da Dn D2 4 6 8 बुध्येथा, D3 5 युध्येथा (for बिभ्येथा) D7 S ज्ञातिभ्यो बिभि(M2 °भृ)याच्चै(T2 °श्चै)व — b) K3 5 V1 B Da Dn D2–6 8 भय (for यत°) M1, 3 4 transp यत° and सदा. K3 तत ; K4 तता, T1 G2–4 तदा (for सदा) — c) D7 S युवराजश्च (M2 °जेव) (for उपराजेव) Ca cites उपराजा (as in text) D2 3. 5 राजर्धिर्, T2 G1 राजा च (for राजर्धिं) — d) D2 6 T2 G1 ज्ञातिं (for ज्ञातिर्) Da2 om सहते.

33 a) D5 समोर् (for ऋजोर्) — b) G4 श्रीमत° (for ह्रीमत°) — c) Dn1 अज्ञो (for नान्यो) Ś1 K4 ज्ञातिर्, K1 ज्ञातिं (for ज्ञातेर्) D7 T1 G1–3 महाभाग ; T2 °भगो ; G4 °राज (for °बाहो).

34 a) K5 B3 Dn D2 3. 5 6 अज्ञातिनो, B5 °नता ; D7 S °तयो (for °तिता) K3 V1 B Da Dn D2–6 3 T2 G1 M [अ]पि न सुखा (B3 °खी, B5 D3 5 °ख), D7 T1 G2–4 अप्यसुखदा (for नाति सुखा) — b) K4 नावज्ञेयास् ; D2 3 5 °ज्ञातस् (for °ज्ञेयास्) K2 5 V1 B (except B2 4) Dn तत पर, K4 स्वज परं, D3 स्वनंतर ; D2 3 स्वत पर°, D4 तु ज्ञातय°, D3 स्वन° पर (for त्वत परम्) D7 T G M2 ज्ञातयोपि (M2 °यश्च) सुखावहा°, M1 3 4 ज्ञातयश्च भयाप(M4 °व)हा° — D3 repeats 34c–35c after 36 — c) K4 अज्ञातिमते, M1 °मत — d) D5 पर (for परे) K2 3 5 B0 2–5 Da Dn D2 3 5, 6 8 चाभि- (for परि-) B1 च (for [उ]त).

35 For the repetition in D3, cf. v 1 34 — a) D4 न (for नि) Ca cites निकृतस्य (as in text) D7 S परैर् (for नरैर्) — b) K1 ज्ञातिधर्म (for °रेव). — c) Ś1 K1 D4 नान्याद्, K2 3 नान्यद्, K4 5 V1 B D2 3 5 8 नान्यो (for नान्यैर्) Ś1 K1–3 D4 T2 विकार (for निकार). Da नाज्ञातिरनुगृह्णाति (= 37a) — d) K2 3 ज्ञातेर्ज्ञाते , Dn D6 ज्ञातिर्ज्ञाते° (by transp) K1 कदा न च, K4 5 V1 B D (except D7, D1 missing) कथंचन (for कदा°)

36 a) K3 4 अभि , B0 lacuna, D4 T2 G1 2 M2 अव , D7 T1 G3 4 M1 3 4 इव (for एव) K4 -जानीहि, Da1 जानंति (for जानाति) — b) D4 बांधवै स्वकै°, D7 S बांधव (G3 °वै) परै° (for °वैरपि) — c) G1 सद्धि (for सन्ति) — d) K3 नैर्गुण K3 वापि ; K4 D4 M4 च्चापि, K5 V1 B0 3–5 Da Dn2 D2 3 5 1 नैव ; B1 2 Dn1 D6 7 चैव (for तेषु) — After 36, D3 repeats 34c–35c

37 D3 om from 37a up to नित्य (in 38a) — a)

तान्मानयेत्पूजयेच्च नित्यं वाचा च कर्मणा ।
कुर्याच्च प्रियमेतेभ्यो नाप्रियं किंचिदाचरेत् ॥ ३८
विश्वस्तवदविश्वस्तस्तेषु वर्तेत सर्वदा ।
न हि दोषो गुणो वेति निस्पृक्तस्तेषु दृश्यते ॥ ३९

तस्यैवं वर्तमानस्य पुरुषस्याप्रमादिनः ।
अमित्राः संप्रसीदन्ति तथा मित्रीभवन्त्यपि ॥ ४०
य एवं वर्तते नित्यं ज्ञातिसंबन्धिमण्डले ।
मित्रेष्वमित्रेष्वैश्वर्ये चिरं यशसि तिष्ठति ॥ ४१

इति श्रीमहाभारते शान्तिपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

## ८२

### युधिष्ठिर उवाच ।

एवमग्राह्यके तस्मिञ्ज्ञातिसंबन्धिमण्डले ।
मित्रेष्वमित्रेष्वपि च कथं भावो विभाव्यते ॥ १

### भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वासुदेवस्य संवादं सुरर्षेर्नारदस्य च ॥ २

C 12. 3025
B 12. 81. 2
K 12. 81. 2

---

K1 D7 T1 नज्ञातिर्, G4 अप्रगृहीत — [b]) D7 T G M2 वृद्धिमश्नुते, M1 3 4 वृद्धिमिच्छति (for दिवमश्नुते) K1 नाज्ञाविं हि गमश्नुति, K2-5 V1 B Da Dn D2 3 5 6 न चाज्ञातिर्नमश्नुति (B2 °ते) — [c]) K1 ज्ञातिचेलेषु, K3 °मूलेषु, K4 5 V1 Bo 3-5 Da Dn1 D2 3 5 6 °वर्गेषु; B1 °वेलेषु, B2 °पक्षेषु, Dn2 °सर्वेषु, D4 °भूतेषु; D7 T G M1. 3 4 °सत्स्वेव; M2 °वैरेषु (for °लोकेषु) — [d]) K4 [अ]माधु साधु वा, Da1 साध्वसाधुभिः; Dn2 ** साधुषु, D8 साध्वमाधु वा

38 D8 om up to नित्य (cf. v l 37) — [a]) K1 G2 M2 ता, V1 Da Dn D6 स-, G4 तन्; M4 कान् (for तान्) B4 damaged, M1 3 4 transp मानयेत् and पूजयेत् D4 मनसा पूजयेत्तं च — [b]) K3-5 V1 B (B4 damaged) Da Dn D2-7 S वाचा नित्य (by transp), D8 ** ज्ञाने K8 कर्मणा — [c]) K1 D6 कुर्याश्च K4 [अ]प्रियम् — [d]) Ś1 K1. 2 कंचिद् (for किं°)

39 [ab]) Ś1 विश्वस्त वद विश्वस्तेष्वनुवर्तेत सर्वदा; K1 विश्वस्तवदविश्वस्तेष्वनुवर्तेत सर्वदा, K2 विश्वस्त वद विश्वस्ते विश्वस्तेपि न विश्वसेत्, K3 M2 विश्वस्तवदविश्वस्तस्तेषु वर्तेत (K3 °स्तु) नित्यदा — [c]) K3. 4 D4 वापि; Dn1 वेत्ति; D7 T G M2 4 वेह (for वेति) — [d]) Ś1 K2 निष्पक्तस्; K1 निष्परुस्; K3 4 Dn D6 8 निरूप्यस्, V1 D7 T1 G निस्पृहस्, B3 D2 3. 5 नियुक्तस्, T2 निर्वृतस् (for निस्पृक्तस्) Ca (Cap as in text) cites निःपृक्त T1 G2-4 स्तेषु (for तेषु) K4 वर्तते; B1 D5 विद्यते (for दृश्यते). D4 निःपृथक्त्वेन दृश्यते.

40 = (var) 12 84. 15 — [a]) Bo तस्येव, Dn अस्यैव, T2 यस्यैव (for त°) — [b]) B1 प्रमादिनः, D6 [अ]प्रमाथिनः (for °दिनः) — [c]) T2 सप्रसीदवस् — [d]) D7 S सतो (for तथा) K1 4 मित्रा, B1 मैत्रा, D7 T1 G1 3 4 मित्र (for मित्री) Ś1 K1 2 D7 भवति च, T1-G2-4 °वत्युत (for भवन्त्यपि)

41 V1 reads from 41[a] up to the second मित्रेष्व (in 12 82 1[c]) on marg — [b]) D4. 6 G3 -सबध (for -संबन्धि) Da2 -मडल (for -मण्डले) D4 ज्ञातिसबधमीहते — [c]) D4 [अ]मात्येषु (for [अ]मित्रेषु) M1. 3 4 [अ]पि च (for [ऐ]श्वर्ये) K4 5 V1 Bo 2-5 Da Dn D2 3 5 6 8 मित्रेष्वमित्रे मध्यस्थे, B1 मित्रेषु मित्रमध्यस्थो — [d]) B1 विद्वान् (for चिर)

Colophon D1 missing V1 reads the colophon on marg — *Sub-parvan* Ś1 K V1 B Da Dn1 D2-7 T2 G1. 2 4 M राजधर्म — *Adhy name* D4 मित्रामात्यपरीक्षा, D7 T1 G2 4 अमात्यलक्षण, M2 मित्रवृत्तिकथनं — *Adhy no* (figures, words or both) K5 D7 S 82, B1 78, B2 Da2 80, B3 4 D2 79, Da1 81 (as in text) — *Śloka no* Dn 41, D8 32

## 82

☞ D1 is missing for this adhy (cf. v l. 12 79 28)

1 D8 om the ref. V1 reads up to the second मित्रेष्व (in 1[c]) on marg — [a]) M एवमग्राह्यमे (M1 3 °ह्य ए)वासिल् Ca cites अग्राह्यके (as in text) Cv as

C 12. 3026
B. 12. 81 3
K 12. 81 3

वासुदेव उवाच ।

नासुहृत्परमं मन्त्रं नारदार्हति वेदितुम् ।
अपण्डितो वापि सुहृत्पण्डितो वापि नात्मवान् ॥ ३
स ते सौहृदमास्थाय किंचिद्वक्ष्यामि नारद ।
कृत्स्नां च बुद्धिं संप्रेक्ष्य संपृच्छे त्रिदिवंगम ॥ ४
दास्यमैश्वर्यवादेन ज्ञातीनां वै करोम्यहम् ।
अर्धभोक्तासि भोगानां वाग्दुरुक्तानि च क्षमे ॥ ५
अरणीमग्निकामो वा मथ्नाति हृदयं मम ।
वाचा दुरुक्तं देवर्षे तन्मे दहति नित्यदा ॥ ६
बलं संकर्षणे नित्यं सौकुमार्यं पुनर्गदे ।
रूपेण मत्तः प्रद्युम्नः सोऽसहायोऽस्मि नारद ॥ ७
अन्ये हि सुमहाभागा बलवन्तो दुरासदाः ।
नित्योत्थानेन संपन्ना नारदान्धकवृष्णयः ॥ ८
यस्य न स्युर्न वै स स्याद्यस्य स्युः कृच्छ्रमेव तत् ।
द्वाभ्यां निवारितो नित्यं वृणोम्येकतरं न च ॥ ९
स्यातां यस्याहुकाक्रूरौ किं नु दुःखतरं ततः ।
यस्य वापि न तौ स्यातां किं नु दुःखतरं ततः ॥ १०
सोऽहं कितवमातेव द्वयोरपि महामुने ।

---

in text —$^b$) K1 Dn2 D6 सवध (for सवन्धि-) —$^c$) D6 [अ]मित्रे मध्यस्थे (for °त्रेष्वपि च) —$^d$) D4 विधीयसे, Ca विभाव्यते (as in text)

2 D8 om the ref —$^a$) B1 तत्रापि —$^c$) N (except Ś1 K1 D7, D1 missing) संवाद वासुदेवस्य (by transp). —$^d$) K3 5 देवर्षेर्, D7 S महर्षेर् (for सुर°)

3 D8 om the ref. G1 भगवान् (for वासुदेव) —$^a$) B1 नाशक्तृपरम मित्र —$^c$) K4 अपीडतो (for अपण्डितो) —$^d$) K3 नाथ, Dn2 नापि (for वापि) All MSS (except Ś1 K4, D1 missing) Ca [अ]नात्मवान् (for नात्म°).

4 $^a$) Ś1 K1 2 सता (for स ते) M आज्ञाय (for आस्थाय) —$^b$) D4 वक्षामि Ś1 K1. 2 भारत; D4 नारद — After $4^{ab}$, D7 reads for the first time $8^{ab}$, repeating it in its proper place —$^c$) D7 S transp च and बुद्धिं D7 S ते प्रेक्ष्य (for संप्रेक्ष्य) K3-5 V1 B Da Dn D2 3 5 6 8 कृत्स्न (D2 °र्णां) बुद्धिबल प्रेक्ष्य (D8 प्रेत्य) —$^d$) B1 D7 T G M2 त्रिदिवगम (G3 °त°)

5 $^a$) D7 दार्ढ्यम् (for दास्यम्) D6 नादेन (for वादेन). —$^b$) Dn2 न, D7 वा, M हि (for वै) K4 कथचन (for करोम्यहम्) —$^c$) K2 5 B6 2-5 Dn D2 3 5 6 8 अर्धं, B1 अर्धस्, D7 T1 G4 अर्थे (for अर्ध). Ś1 K1 D4 -भाक्चास्मि, K3 -भोक्ता च, B1 त्यक्तास्मि; D7 भोगोस्मि (for भोक्तासि) Da भोक्तानां; D2 3 5 भोगाय (for °नां) —$^d$) D6 चाक्षमे; G1 चक्ष्व मे (for च क्षमे).

6 $^a$) D2 3 5 अग्निकामीव, D4 °कामेव; Ca °कामो वा (as in text) — T1 om (? hapl) $6^c$–$7^d$ —$^c$) T2 वचो (for वाचा) K2 निरुक्त, V1 B2 यदुक्त (for दुरुक्तं) —$^d$) K1 त (for तन्) D7 T2 G3 मां, G1 M1 3 4 मा (for मे)

7 T1 om 7 (cf v l 6) —$^a$) M1 बल (for बलं) B1 शंकर्षणे —$^b$) Ś1 K1 2 वदे, M4 गमे (for गदे) —$^d$) K1 [अ]सौ, D4 [अ]तो (for सो) B1 D6 [ऽ]सहाये (D6 °या) Ca cites असहाय

8 For the repetition of $8^{ab}$ in D7, cf v l 4 —$^a$) Ś1 महा; K1 D4 अथा, K3 तथा (for अन्ये) D7 (both times) S (except G1) [ऽ]पि (for हि) B2 -महाभाग Ca cites सुमहा° (as in text) K2 अन्वाहिता महाभागा —$^b$) K2 M4 दुरासद°; K3 °सद; K6 V1 B Da Dn D2 3 5 6 8 Ca दुरुत्सहा (D8 °ह°) (for दुरासदा) —$^d$) D2 नारदोंधक Ca cites अन्धकवृष्णय (as in text)

9 $^a$) Ś1 K1 Ca न (for स) G1 यस्य स स्युर्निवश स्याद् (sic), Cv as in text —$^b$) T2 सुहृद, M2 यस्य स्यात् (for यस्य स्यु°) K2-5 V1 B Da Dn D8 5 8 कृत्स्नम्, D2 कृष्णम्, Ca कृच्छ्रम् (as in text) —$^c$) D7 S द्वयोरेव प्रचरिते, Cv द्वयोरेव प्रचलतोर् —$^d$) B4 वृणोसि (for °मि) G4 तव (for न च)

10 $^a$) M1 3 स्याताद्यस्य (for स्याता यस्य) Ś1 K1 [आ]हुकाक्रूरौ (for [आ]हु°). Ca cites आहुक° D7 स्याता यस्यासुतौ क्रूरौ, T2 भृत्या यस्याहुका क्रूरा —$^b$) K4 तु, Dn1 न (for नु) D7 S (except M4) कष्टतरं (for दुःख°) —$^c$) K3 5 B1 2 Da Dn D2 4. 6 7 S चापि, K4 नापि (for वापि) —$^d$) D3 तु (for नु). D4 M3 कष्टतर (for दुःख°).

एकस्य जयमाशंसे द्वितीयस्यापराजयम् ॥ ११
ममैवं क्लिश्यमानस्य नारदोभयतः सदा ।
वक्तुमर्हसि यच्छ्रेयो ज्ञातीनामात्मनस्तथा ॥ १२
नारद उवाच ।
आपदो द्विविधाः कृष्ण बाह्याश्चाभ्यन्तराश्च ह ।
प्रादुर्भवन्ति वार्ष्णेय स्वकृता यदि वान्यतः ॥ १३
सेयमाभ्यन्तरा तुभ्यमापत्कृच्छ्रा स्वकर्मजा ।
अक्रूरभोजप्रभवाः सर्वे ह्येते तदन्वयाः ॥ १४
अर्थहेतोर्हि कामाद्वाद्वारा बीभत्सयापि वा ।
आत्मना प्राप्तमैश्वर्यमन्यत्र प्रतिपादितम् ॥ १५
कृतमूलमिदानीं तज्जातशब्दं सहायवत् ।
न शक्यं पुनरादातुं वान्तमन्नमिव त्वया ॥ १६
बभ्रूग्रसेनयो राज्यं नाप्तुं शक्यं कथंचन ।
ज्ञातिभेदभयात्कृष्ण त्वया चापि विशेषतः ॥ १७
तच्चेत्सिध्येत्प्रयत्नेन कृत्वा कर्म सुदुष्करम् ।
महाक्षयव्ययं वा स्याद्विनाशो वा पुनर्भवेत् ॥ १८
अनायसेन शस्त्रेण मृदुना हृदयच्छिदा ।
जिह्वामुद्धर सर्वेषां परिमृज्यानुमृज्य च ॥ १९

C. 12 3042
B 12. 81 19
K 12. 81 19

11 $^a$) D4 सोह किं वधुमात्रेव —$^b$) K. V1 B Da Dn D2 3 5 6 महामते (for °मुने) —$^c$) D· S (except M2) नैकस्य (for एकस्य) Ś1 K1 2 आशासे (for °माशंसे) —$^d$) K1 परायण, V1 B1 D4 7 S Cv पराजय (for [अ]प°)

12 $^a$) K4 ममेव, M2 4 मामैव (for म°) —$^b$) D7 T G M1. 3 4 [उ]भयदर्शनात्, M2 °तस्त्वया (for °त सदा) —$^c$) T2 G1 इच्छामि (for अर्हसि) —$^d$) G4 तत्त्र (for तथा)

13 D8 om the ref —$^a$) G1 विविधा (for द्वि°) —$^b$) D8 चाभ्यांतरम्, M1. 3 बाह्यांतराम् (for चाभ्यन्त°) K3 4 D2-5 G2 तथा (for च ह) —$^c$) K3 D4 भावि र्भवति, M1. 3 प्रादुर्भवति —$^d$) K2 B1 सुकृता, V1 सुकृतो, Bo सुकृता, Da1 सुकृताद्, Da2 सुकृता, Dn1 D6 स्व (D6 स्व) भावाद्, D2 स्वकृताद्, Ca °ता (as in text) K3 चान्यत (for वा°)

14 $^a$) K1 सोयम् Ś1 आभ्यंतरात्, K1 आत्य तरात्, K4. 6 V1 B1 Dn1 D2 6 8 अभ्यंतरा, D7 T1 G आत्मोद्भवा (for आभ्यन्तरा) M सेयमाभ्यतरेभ्यस्तु —$^b$) K1 कृच्छ्रम्, Dn1 D4 कृच्छ्रात् (for कृच्छ्रा) Ś1 K1 च कर्मजा, D7 T1 G3 4 स्वकर्मजा —$^c$) D2 3 5 °प्रवरा (for प्रभवा) —$^d$) M2 [ऽ]पि (for हि) B4 Ca एते (for ह्येते) Ś1 (*sup lin* as in text) K1 D7 M3 Ca स्वदन्वया°, D4 तदा° (for तद्°)

15 V1 reads 15$^{ab}$ on marg —$^a$) Ś1 K1 च का माद्वा (K1 °च), K4 [अ]का°, G1 हि कर्माद्वा, G2 हि कामाद्दि (for °माद्वा) —$^b$) K1 2 द्वार, K3-5 B Da Dn D2 3 5 6 8 वाचा, D7 S वीर° (for [अ]द्वारा) G1 M2 च (for वा) V1 वाचा भावजामिपिवा (sic), D4 तथा ज्ञातिविभिन्नया ꕥ Ca गर्हितया बीभत्सया द्वारा । ꕥ

16 $^a$) D4 जात (for कृत) K5 V1 B Dn1 D2 3 5-8 G1 M2 Cv तु (for तज्) —$^b$) K1. 4 ज्ञात शब्द, K2 3 5 V1 B Da Dn M2 ज्ञाति°, D2 3 5 6 ज्ञातिशब्द; D4 संभूत च, D7 T1 G राजशब्द° (G1 °ब्द), D8 ज्ञातिवृद, T2 ज्ञात शब्द° (for जातशब्दं) K1 B3. 5 Da Dn1 D3 6 सहायवान्, K3 4 Dn2 D2 6 8 °वान् (for °वत्) —$^c$) Ś1 K1 2 4 युक्त (for शक्य) —$^d$) D4 7 S स्वय (for त्वया)

17 $^a$) K2 4 वधुग्रमेनयद् (sic), D7 S बभ्रूग्रसेनतो (for °सेनयो) Ca cites बभ्रु —$^b$) D6 प्राप्तु शक्य, D7 G2 शक्य प्राप्तुं, T G1. 3. 4 शक्य नाप्तु (by transp) Ca cites आप्तु (as in text) Ś1 K2 4 B1 कदाचन (for कथ°) —$^d$) K5 B1 D2-5 7 8 T G2 3 वापि, G1 यद्वा (for चापि)

18 $^a$) K2 3 5 B3 4 D (except D4, D1 missing) S तच्च, B1 तत (for तच्चेत्) —$^c$) K1 महायत्न; K2 5 B (except B2) Dn D2 3 5 6 8 महाक्षय; K3 D4 महान्क्षयो (D4 °ये), V1 G2 M Cv महत्क्षय; D7 T G1. 3 4 महद्य(T2 °ज्ञ)यं (for महाक्षय) K1. 3 5 Dn D4 G2 व्ययो, D7 T G1 3 4 क्षय, Cv व्यय (for व्यय) M तन् (for वा) —$^d$) M2 वै (for वा)

19 $^a$) K4 V1 Bo 1 D6 अनायासेन (for °यसेन) T1 शास्त्रेण —$^d$) Bo प्रतिमृज्य, B2 प्रतिगृह्य, Da D2 8 प्रविमृज्य, Dn2 परिवृत्य (for °मृज्य) S1 K1. 4 विमृज्यानुमृज्य (K1 °सृ, K4 °मृ)ज्य च, V1 प्रमृज्या नुप्रमृज्य च, B1 प्रतिगृह्यानुगृह्य च

C 12. 3043
B 12. 81. 20
K 12. 81. 20

वासुदेव उवाच ।
अनायसं मुने शस्त्रं मृदु विद्यामहं कथम् ।
येनैषामुद्धरे जिह्वां परिमृज्यानुमृज्य च ॥ २०
नारद उवाच ।
शक्त्यान्नदानं सततं तितिक्षा दम आर्जवम् ।
यथार्हप्रतिपूजा च शस्त्रमेतदनायसम् ॥ २१
ज्ञातीनां वक्तुकामानां कटूनि च लघूनि च ।
गिरा त्वं हृदयं वाचं शमयस्व मनांसि च ॥ २२
नामहापुरुषः कश्चिन्नानात्मा नासहायवान् ।
महतीं धुरमादत्ते तामुद्यम्योरसा वह ॥ २३
सर्व एव गुरुं भारमनड्वान्वहते समे ।
दुर्गे प्रतीकः सुगवो भारं वहति दुर्वहम् ॥ २४
भेदाद्विनाशः संघानां संघमुख्योऽसि केशव ।
यथा त्वां प्राप्य नोत्सीदेदयं संघस्तथा कुरु ॥ २५
नान्यत्र बुद्धिक्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र धनसंत्यागाद्गणः प्राज्ञेऽवतिष्ठते ॥ २६
धन्यं यशस्यमायुष्यं स्वपक्षोद्भावनं शुभम् ।
ज्ञातीनामविनाशः स्याद्यथा कृष्ण तथा कुरु ॥ २७
आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ।
षाड्गुण्यस्य विधानेन यात्रायानविधौ तथा ॥ २८

---

20 K1 om (hapl) 20 Ś1 reads 20 on marg —a) V1 B0 1 अनायास (for °यस) D4 मुनिश्रेष्ठ, T2 कथ शस्त्र, M1 3 मुने शस्त्रं —b) K4 मृदुर् (for मृदु) D4 मृदु विंद्यामह कथं —c) Ś1 D4 7 T G2 3 M2 उद्धरेज् (for °रे) M2 जिह्वा —d) K2 प्रविसृज्य, K4 परिमृज्य, B0 2, 5 प्रतिमृज्य, B1 D2 प्रवि° (for परि°). Ś1 विमृज्यानुप्रयुज्य च, B1 परिगृह्यानुगृह्य च

21 D3 om the ref —a) K4 G1 शक्या (for शक्त्या) B3 [अ]र्थदानं, D4 [अ]न्नदानात (for °दान) —b) K5 V1 B D (except D7, D1 missing) तितिक्षार्जवमार्दवं (D4 °वै°) —c) K4 अथार्हे; D7 3 T G M2 यथार्हे (for °र्ह) D2 3 पूजा (for पूजा) —d) K1 अनामय (for °यसम्)

22 b) K2 3 5 V1 B Da Dn D2 3 5 6 3 कटुकानि, D7 T1 G2-4 गुरूणि च; M2 मृदूनि च (for कटूनि च) —c) B1 सुहृदां (for हृदय) D7 T1 G2-4 वाचा (for वाच). —d) K1 शामयस्व, Da1 सम° (for शम°)

23 V1 reads 23a-25b on marg —a) B1 न मेह, D2 3 7 3 T G नामहान्, D4 म महा (for नामहा) K4 -पुरुष, M2 -पुरुप —b) B1 नानार्था (for °त्मा). V1 नानात्मान सहायवान्; D4 कश्चिज्ञानास° —c) K1 पुरम् (for धुरम्) K1 2 5 V1 B1-3 Da Dn D2 6 3 M2 आधत्ते, D7 T G M1 3 4 आदाय (for आदत्ते) —d) K1 m [उ]त्सवे (for [उ]रसा) D4 सह, T2 G2 M3 वहेत् (for वह). D7 T1 G1 3 4 M1, 3 4 समुद्यम्योरसा वहेत्

24 V1 reads 24 on marg. —a) Ś1 K1, 2 4 V1 B2-4 Da D2 3 T G2-4 M2 सर्वम् (for सर्व). D3 गुरुर् (for गुरु) —b) D6 सम, Ca समे (as in text). —cd) Da1 युगे (for दुर्गे) K1, 2 4 B1 D4 7 T G2-4 प्रतीत°, K3 प्रतीता; G1 प्रतीति°, M1 प्रतीत, M4 प्रतीग°, Ca प्रतीक° (as in text). K1 सुभग-, V1 सुभशो, B5 सुगवा (for °वो) Cv cites सुगवो, भारे, वहति, Cd as in text

25 V1 reads 25ab on marg. —a) V1 सर्वेषां, B0 सहाना, G4 संख्याना (for संघानां) —b) K2 मेघमुख्यो, G1 सर्व°, G4 सख्य° (for सघ°) —Dn1 om 25cd —c) K1 नोत्सदेद्, K4 नोत्सेदद्, D2 नोत्सदेद् (for नोत्सी°). —d) Ś1 सगस् (for संघस्) D6 lacuna for कुरु

26 G2 om (hapl) 26-27 —a) G1 अन्यत्र M1 3 वुद्धि° (for बुद्धि) B1 कातिभ्यां, D7 -क्षांतिस्यान् (for क्षान्तिभ्या) —c) D3 गध (for धन) B0 3 4 D2 3 5 3 -सयोगाद् (for सत्या°) —d) B5 D3 G1 गुण K1 2 4 G1 प्राज्ञोवतिष्ठते, K5 प्राज्ञेव तिष्ठति; D2 3 प्रत्यवतिष्ठते (for प्राज्ञेऽवतिष्ठते) D4 गण° प्रागवतिष्ठति; D7 T G3 4 M2 गुणास्तिष्ठति पूरुषे, M1 3 गुणा° प्राज्ञेवतिष्ठति, M4 गुणात्प्राज्ञोवतिष्ठति

27 G2 om 27 (cf. v l 26) B1 om. 27ab —a) D6 धान्य (for धन्य) —b) M1 स्वपक्षोन्नावनां. K4 V1 B2 Da Dn D6 सदा, D3 शुभां, M तथा (for शुभम्) —M4 reads 27c-28d after 29 —c) D7 T G3 4 न विनाश°, G1 अपि नाश (for अविनाश°)

28 For the sequence in M4, cf v l 27 —a) D7 T1 G3 तथात्वे (for तदात्वे) —b) K1 [ऽ]स्तु

माधवाः कुकुरा भोजाः सर्वे चान्धकवृष्णयः ।
त्वय्यासक्ता महाबाहो लोका लोकेश्वराश्च ये ॥ २९
उपासते हि त्वद्बुद्धिमृषयश्चापि माधव ।
त्वं गुरुः सर्वभूतानां जानीषे त्वं गतागतम् ।
त्वामासाद्य यदुश्रेष्ठमेधन्ते ज्ञातिनः सुखम् ॥ ३०

इति श्रीमहाभारते शान्तिपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## ८३

भीष्म उवाच ।
एषा प्रथमतो वृत्तिर्द्वितीयां शृणु भारत ।
यः कश्चिज्जनयेदर्थं राज्ञा रक्ष्यः स मानवः ॥ १
ह्रियमाणममात्येन भृतो वा यदि वाभृतः ।
यो राजकोशं नश्यन्तमाचक्षीत युधिष्ठिर ॥ २
श्रोतव्यं तस्य च रहो रक्ष्यश्चामात्यतो भवेत् ।
अमात्या ह्युपहन्तारं भूयिष्ठं घ्नन्ति भारत ॥ ३
राजकोशस्य गोप्तारं राजकोशविलोपकाः ।

C 12 3058
B 12 82 4
K 1. 87 4

---

(for जस्रि) — ᶜ) Ś1 K1. 4 च याने च, K2 3 Da D4 T2 G1 M विधाने च, D2 3 5 प्रमादेन (for विधानेन) — ᵈ) G3 तदा (for तथा) B1 पात्रापात्रविधौ तथा

29 ᵃ) K5 B1–3 Dn D2 3 5 6 8 यादवा॰, B0 5 मधव॰, Da माधव॰ (for ॰वा) K4 कुरुरा, B1 सौरवा, D3 कुंजरा, M1. 3 कुकरा, M4 किकुरा (for कुकुरा) T2 कुरकाभोजा॰ — ᶜ) B0 त्वय्यासिक्ता, D2. 3. 5 त्वयासक्ता, D7 S त्वय्यायत्ता (for ॰सक्ता) D4 देवगधर्वसहिता — ᵈ) G2 लोके (for लोका) — After 29, M4 reads 27ᵉ–28ᵈ

30 ᵃ) K3 B0 Dn D3 5 उपासते (for ॰सते) B1 दुर्बुद्धिम्; Da तां बुद्धिम् (for त्वद्बु॰) D7 S त्वद्बुद्धिं समुपासते — ᶜ) Ś1 K1 4 सर्वलोकानां (for ॰भूताना) — ᵈ) Ś1 K4 जानीपि (for ॰षे) D7 T G M1. 3 4 परां गतिं, M2 यथागत, Ca गता॰ (as in text) — ᵉ) G1 M4 यदुश्रेष्ठ (for ॰श्रेष्ठम्) — ᶠ) G1 M4 मोदते (for एधन्ते) K1 ज्ञातय॰, K3 5 V1 B D (D1 missing) T G M1. 3 4 यादवा॰, M2 यदव (for ज्ञातिन॰)

Colophon D1 missing —*Sub-parvan* Ś1 K1–4 V1 B Da Dn D2–7 T G1. 2 4 M राजधर्म —*Adhy name* K3 5 V1 B0 1 3 Da D6 7 T1 G2–4 M1–3 वासुदेवनारदसंवाद॰, D4 वासुदेवनारदसवादे ज्ञातिसवंध॰ —*Adhy no* (figures, words or both) K5 D7 S 83, B1 D8 79, B4 D2 80, Da1 82 (as in text), Da2 Dn 81 —*Śloka no* Dn1 30, D3 31

### 83

☞ D1 is missing for this adhy (cf v 1 12 79 28)

1 D8 om the ref — ᵃ) D7 T1 G2–4 ते प्रथमा, Ca प्रथमतो (as in text) K3 वृद्धिर्, K4 वृत्तं (for वृत्तिर्) — ᶜ) D7 T1 G वेदयेद् (for जन॰) — ᵈ) V1 रक्ष॰, D2 रक्षा Dn D5 दानव (for मानव॰)

2 ᵃ) Ś1 K5 ह्रियमानम्, V1 (*sup lin* as in text) B0–2 क्रियमाणम्, T2 भ्रिय॰, G1 हीयमाणाम् — ᵇ) K4 D6 7 S (except M2) भृत्यो, B1 वृतो, D2 भूतो (for भृतो) B1 वावृत॰, G4 वाहृत, M1. 3 वा सुहृत (for वाभृत) Cv as in text — ᶜ) V1 B Da D2 3 5 6 राजकोप (for ॰कोश) K4 यो राजकोशा नशतम् (sic) — ᵈ) K5 युधिष्टिर॰

3 ᵃ) K2 5 V1 B Da Dn D2 3 5 6 8 अस्य (for तस्य) — ᵇ) D6 M1 रक्षश्च D7 T1 G3 4 (before corr as in text) [s]मवत् (for भवेत्) Dn2 रक्ष्य श्चामात्यमेव च — ᶜ) D7 अमात्यश्च, T1 G3 4 ॰त्य (for ॰त्या) D7 T G1. 3 4 M2 च (for हि) K1 3–5 Dn D2 3 5 6 8 ह्य(K4 6 ह्यु)पहर्तारो, K2 V1 B0 2 4 5 ह्यपहर्तार, B1. 3 ह्यपहतार, D4 ह्यपकर्तारा (for ह्युपहन्तार) M1 3 अमात्याम्युपहतार, Cv अमात्याश्चापहर्तार॰

C 12 3058
B 12 82 4
K 12 82 4

समेत्य सर्वे बाधन्ते स विनश्यत्यरक्षितः ॥ ४
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मुनिः कालकवृक्षीयः कौसल्यं यदुवाच ह ॥ ५
कोसलानामाधिपत्यं संप्राप्ते क्षेमदर्शिनि ।
मुनिः कालकवृक्षीय आजगामेति नः श्रुतम् ॥ ६
स काकं पञ्जरे बद्ध्वा विषयं क्षेमदर्शिनः ।
पूर्वं पर्यचरद्युक्तः प्रवृत्त्यर्थी पुनः पुनः ॥ ७
अधीये वायसीं विद्यां शंसन्ति मम वायसाः ।
अनागतमतीतं च यच्च संप्रति वर्तते ॥ ८
इति राष्ट्रे परिपतन्बहुशः पुरुषैः सह ।
सर्वेषां राजयुक्तानां दुष्कृतं परिपृष्टवान् ॥ ९
स बुद्ध्वा तस्य राष्ट्रस्य व्यवसायं हि सर्वशः ।
राजयुक्तापचारांश्च सर्वान्बुद्ध्वा ततस्ततः ॥ १०
तमेव काकमादाय राजानं द्रष्टुमागमत् ।
सर्वज्ञोऽस्मीति वचनं ब्रुवाणः संशितव्रतः ॥ ११
स स्म कौसल्यमागम्य राजामात्यमलंकृतम् ।
प्राह काकस्य वचनादमुत्रेदं त्वया कृतम् ॥ १२
असौ चासौ च जानीते राजकोशस्त्वया हृतः ।

---

— $^d$ ) K3 ज्ञातिन ( for भूयिष्ठ ) K5 यदि ( for घ्नन्ति )

4 $^a$ ) V1 B D2 3 6 राजकोषस्य ( for °कोशस्य ) D5 गोप्तारो K5 राज्यागे तस्य कर्तार — $^b$ ) V1 B D2 3 6 राजकोप , D4 °लोको ; M2 °गोप ( for राज- कोश ) K1 D5 -विलोपक° , B1 -विनाशका° ( for -विलोपका ) — $^c$ ) D4 समेतो ( for समेत्य ) Ś1 K1 2 धावते , K4 धावती , B1 धारते ( for बाधन्ते ) K3 सर्वे तमनुधावते — $^d$ ) D4 वै ( for वि- ) V1 B1 [अ]लक्षित° ( for [अ]र° )

5 $^a$ ) T2 -वृत्तिय , G2 -वृष्णीय° ( for वृक्षीय° ) — G1 om ( hapl ) 5$^d$–6$^c$ — $^d$ ) K2 अमात्य, K3 कौशल , K4 5 V1 B Dn D2–4, 6 8 कौशल्य ( for कौसल्य )

6 G1 om 6$^{abc}$ ( cf v 1 5 ) — $^a$ ) K1 D5 7 T1 G4 कौस( D5 °श )लानाम् , K3 5 B0 2–5 Dn D3 4 8 कोश( B3 5 °प )ला° , B1 G2 3 कौश( G2 3 °स )ल्या° ( for कोसला° ) K3 Dn2 आधिपत्ति , Dn1 D4 अधिपत्ति , D8 अधिपत्य — $^b$ ) B5 D6 7 संप्राप्त ( for °प्ते ) Dn3 D8 क्षेमदर्शिन , Ca °दर्शिनि ( as in text ). K3 5 Dn1 D3–5 सप्राप्त ( Dn1 °प्त ) क्षेमदर्शिन ( D3 by corr as in text ) — $^c$ ) T2 वृत्तिय ; G2 -वृष्णीय ( for वृक्षीय ) — $^d$ ) M1 3 4 कोसलेंद्रमुपागमत्

7 M2 reads 7$^a$ twice After 7$^a$, M2 ins कोसलेंद्रमुपागमत् ( cf v 1 6$^d$ ) — $^b$ ) D4 विषये , G1 ( before corr ) विजय — $^c$ ) K3 5 V1 B Da Dn D3–8 S सर्वं ( for पूर्वं ) B5 m यत्त , D3 5 M2 युक्त , D7 वकु , T1 G2–4 व्यक्त , M1 3 युक्त° ( for युक्तः ) K1 पूर्वं परिचरत्युक्त , D2 सर्वपरिचरद्युक्त ( sic ) — $^d$ ) G2 प्रवृत्त्यर्थं , Ca °र्थी ( as in text ) Cv as in text

8 $^a$ ) Ś1 ( *sup lin* ) अधीते , K5 V1 B Da Dn D6 6 8 अधीष्व ( for °ये ) — $^b$ ) D6 सम ( for मम ) — $^c$ ) D7 T G M3 अतिक्रान्त ( for अतीत च )

9 $^a$ ) K1 इह ( for इति ) T2 G1 परिवदन् ( for °पतन् ) — $^b$ ) All MSS ( except Ś1 K1–4 D4 , D1 missing ) बहुभि ( for °श ) K1 इह ( for सह ) — $^c$ ) K3 om ( hapl ) from युक्ताना up to पचाराश्च ( in 10$^c$ ). D2 राजवृत्तानां , Ca °युक्ताना ( as in text ). Cv as in text — $^d$ ) K5 V1 B Da Dn D2 3 5 6 8 T2 G2 M2 दुष्कर , G1 दुष्कृत° ( for °त ) K2 5 V1 B D ( except D4 , D1 missing ) T1 G2–4 M1 3 4 दृष्टवान् ( for -पृष्ट° )

10 K3 om up to पचाराश्च ( cf v 1 9 ) — $^a$ ) K4 वुद्ध्वा ( for बुद्ध्वा ) K5 राज ( for तस्य ) — $^b$ ) B0 D3 व्यवसाये ( B0 °यी ), Ca °साय ( as in text ) T2 सर्वत° — $^c$ ) K4 5 B0 2–5 D2 3, 5, 8 राजयुक्तो ( K4, 5 B3 °क्ता )पहारां( K4 °कारां ; B0 °हारा )श्च , B1 राजायुक्तायवारांश्च Ca cites अपचारान्

11 $^a$ ) K2 5 V1 B Da Dn D2 3 5 6 8 तत° स ( for तमेव ) — $^b$ ) Da G3 आगत , D8 आगमन् B1 राजन्दु:ख समागमत् — $^c$ ) G1 [ऽ]सीति — $^d$ ) V1 D6 ब्रुवाण , G1 अब्रवीत् K1, 2 4 सश्रित , K3 B0 4, 5 D3–5 8 शसित- , D2 संसित ( for सशित ) V1 -व्रत ( for व्रत. )

12 $^a$ ) V1 सम्यक् ( for स स्म ) K3 5 V1 B ( except B5 ) Dn D2–6 8 कौशल्यम् ( for कौस° ) — $^b$ ) D7 S राजामात्यैर् ( for °मात्यम् ). G3 अलङ्कृत — $^c$ ) D4 प्राहु — $^d$ ) Da हृतं ( for कृतम् )

13 D8 om 13 — $^a$ ) K4 काको च ; B1 असौ

एवमाख्याति काकोऽयं तच्छीघ्रमनुगम्यताम् ॥ १३
तथान्यानपि स प्राह राजकोशहरान्सदा ।
न चास्य वचनं किंचिदकृतं श्रूयते क्वचित् ॥ १४
तेन विप्रकृताः सर्वे राजयुक्ताः कुरूद्वह ।
तमतिक्रम्य सुप्तस्य निशि काकमपोथयन् ॥ १५
वायसं तु विनिर्भिन्नं दृष्ट्वा बाणेन पञ्जरे ।
पूर्वाह्णे ब्राह्मणो वाक्यं क्षेमदर्शिनमब्रवीत् ॥ १६
राजंस्त्वामभयं याचे प्रभुं प्राणधनेश्वरम् ।
अनुज्ञातस्त्वया ब्रूयां वचनं त्वत्पुरो हितम् ॥ १७
मित्रार्थमभिसंतप्तो भक्त्या सर्वात्मना गतः ।
अयं तवार्थं हरते यो ब्रूयादक्षमान्वितः ॥ १८
संबुबोधयिषुर्मित्रं सदश्वमिव सारथिः ।
अतिमन्युप्रसक्तो हि प्रसज्य हितकारणम् ॥ १९
तथाविधस्य सुहृदः क्षन्तव्यं संविजानता ।
ऐश्वर्यमिच्छता नित्यं पुरुषेण बुभूषता ॥ २०
तं राजा प्रत्युवाचेदं यन्मा किंचिद्भवान्वदेत् ।

C. 12. 3075
B. 12. 82. 20
K. 12. 82. 21

---

च, D2 8 चाशौ च, D5 काशौ च, D7 T1 G3 4 च सौम्य, G2 च सम्यग्, M2 चासौ न (for चासौ च) D6 जानीत D4 मशौचाशौच जानीते (sic) — K3 om. (hapl.) from 13[b] up to राज (in 14[b]) — [b]) V1 B D2 3.5 राजकोपस् (for °कोशस्) D6 कृत (for हृत) — [d]) D7 त्व (for तच्) M1.3 4 मत्र (for मनु)

14 K8 om up to राज (cf v 1 13) — [a]) K1 D7 T1 G M4 मथ (for तथा) D2 3 5 7 S (except T2 G1 M4) स (for स) — [b]) K5 V1 B D2 3 5 6 T2 G1 M4) स (for स) — [b]) K5 V1 B D2 3 5 6 राजकोप- (for °कोश) D4 lacuna, D7 T1 G3 4 -गतास्, G2 -हृतास् (for -हरान्) K5 D2 3 5 8 तत°, V1 B1 2 4 Da2 Dn1 D4 6 7 T G1 3 4 M2 तदा, Bo 2.3 Da1 Dn2 M1 3 4 तथा (for सदा) — [cd]) D4 चान्य (for चास्य) K3 5 V1 B Da Dn D2–5 3 M1.3 4 मनृत (for मकृत) D7 T G M2 न चास्य किंचिदनृत वचन श्रूयते क्वचित्

15 [c]) M मभिक्रम्य (for मति°) K2 4 सुप्त च, D7 T1 G3 4 सुप्त तु (for °प्तस्य). K3 om. from प्तस्य up to नम (in 16[d]) Ś1 m K5 V1 B Da Dn D2 3 5 6 तमस्यति (K5 °स्याति, Dn D6 °स्यभि) प्रसुप्तस्य — [d]) K5 Bo 3 4 Dn D2–5 मवेघयन्, B2 D8 मपोय यत्, D6 G1 3 मवोधयन्, M2 मयोधयन् (for मपोथ)

16 K3 om up to नम (cf v 1 15) — [a]) D7 S (except T2) विनिर्भिण्ण (for °भिन्न) — [c]) K5 Dn2 D4 पूर्वाह्णे K4 वाक्यो — [d]) K4 Da1 -दर्शनम् (for -दर्शि)

17 [a]) D7 S राजानम् (for राजस्त्वाम्) — [b]) G1 प्रभु — [c]) K3 D4 मनुज्ञया तव ब्रूयां — D4 om (hapl.) from 17[d] up to ब्रूया (in 18[d]) — [d]) D6 भवत (for वचनं) K1 त्वत्परो, K2 5 V1 B D (D4 om, D1 missing) S भवतो- (b1 °ता, T2 °ते), K4 मधुरो (for त्वत्पुरो)

18 D4 om up to ब्रूया (cf v 1 17) — [a]) B1 D3 6 8 मति, D7 T G उप (for मभि) D2 3.5 सपक्षो, D6 सतप्ता, D8 सतप्तो — [b]) M2 गत Cv as in text — [c]) K3–5 B1 3 5 Da Dn D2 6 8 Cv [म]र्थो ह्रियते, V1 Bo 4 D3 5 [म]र्थो क्रियते (for [म]र्थं हरते) — [d]) Ś1 K4 हि क्षमान्वित Cv as in text — For 18[cd], D7 S subst

201* ह्रियते हि महार्थश्च पुरुषे विक्रमत्यपि ।

[G1 ह्रीयते T2 यद्धिहार्थो वै, G1 M2 ह्यमिनार्थो (M2 °र्थे) पि, G2 [ऽ]निमहार्थ च, G4 हि महार्थोपि, M1.3 4 [ऽ]यमिहार्थेनि (for हि महार्थश्च) D7 पौरुषो, T2 G1 पौरुषे, G3 M1.2 पुरुषो (for पुरुषे) D7 T2 M [ऽ]नि (for वि-) ]

19 [a]) B1 T2 G1 सनि (T2 G1 त स) बोधयिषुर्, B4 5 D7 सबुबोधयिषु (for °यिषुर्) — [b]) B4 सारथे — [c]) Ś1 मतिमन्यु°, K1 मधिमन्यु, D7 S (except B1 M2) मपि मन्यु- (D7 °न्यु) (for मतिमन्यु) G4 स, M4 [ऽ]पि -प्रयुक्तो, D6 -प्रशक्तो (for प्रसक्तो) D7 S प्रसज्येते (T2 °द्वि) ति (for °ज्य हित) — [d]) K3 प्रसह्य हित, K4 5 V1 B Da Dn D2 3 5 6 8 प्रसह्य हितकारणात् (B2 Da °ण्यया)

20 [a]) K4 5 Bo 4 D2 3 5 8 त (D2 य) था मित्रस्य, G2 तथा विमज्य (for तथाविधस्य) K5 V1 B Da Dn D2 3.5 8 M2 सुहृदा, D4 °द, D6 °दो (for °द) — D4 om. (hapl) 20[b]–21[a] — [b]) Dn क्षतव्यस् V1 Bo 3 4 D2 स्व, K3 स, K5 B2 D3 5 6 8 स्व, Dn1 स्व, Dn2 त (for स-) K3 B5 M1 3 सु, — Da om 20[cd] Dn2 विजानता (Dn2 °त)

21 D4 om 21[a] (cf v 1 20) — [a]) D8 त राजा

C 12. 3075
D 12. 82. 20
K 12. 82 21

कस्मादहं न क्षमेयमाकाङ्क्षन्नात्मनो हितम् ॥ २१
ब्राह्मण प्रतिजानीहि प्रब्रूहि यदि चेच्छसि ।
करिष्यामि हि ते वाक्यं यद्यन्मां विप्र वक्ष्यसि ॥ २२
मुनिरुवाच ।
ज्ञात्वा नयानपायांश्च भृत्यतस्ते भयानि च ।
भक्त्या वृत्तिं समाख्यातुं भवतोऽन्तिकमागमम् ॥ २३
प्रागेवोक्तश्च दोषोऽयमाचार्यैर्नृपसेविनाम् ।
अगतीकगतिर्ह्येषा या राज्ञा सह जीविका ॥ २४
आशीविषैश्च तस्याहुः संगतं यस्य राजभिः ।
बहुमित्राश्च राजानो बह्वमित्रास्तथैव च ॥ २५
तेभ्यः सर्वेभ्य एवाहुर्भयं राजोपसेविनाम् ।
अथैषामेकतो राजन्मुहूर्तादेव भीर्भवेत् ॥ २६
नैकान्तेनाप्रमादो हि कर्तुं शक्यो महीपतौ ।
न तु प्रमादः कर्तव्यः कथंचिद्भूतिमिच्छता ॥ २७
प्रमादाद्धि स्खलेद्राजा स्खलिते नास्ति जीवितम् ।
अग्निं दीप्तमिवासीदेद्राजानमुपशिक्षितः ॥ २८

---

गस्युवानेद — $^{b}$) K V1 B0-2 4 6 Da D2-5 7 8 T2 G1-3 मा; M2 वा (for मा) B3 किंचित्तद्, Dn D6 किंचिन्मां (for मा किंचिद्) — $^{c}$) K2 यस्माद्, B1 2 T2 G3 M1 2 तस्माद्, G4 अस्माद् (for क°)

22 $^{a}$) K4 ब्राह्मण, Dn2 D7 T2 G1-3 M1.8 ब्राह्मण K3 5 V1 B Da Dn D2-5 8 T G1 4 M4 प्रतिजाने ते (B1 °नेय); D6 7 G2 3 M1-3 °जानीते (for °जानीहि). — $^{b}$) B0 प्रभूते (for °हि). K3 4 B Da Dn D2 4 6-8 S यदिह (for यदि च) — $^{c}$) K4 नित्य (for वाक्य). — $^{d}$) K2 3 5 V1 B Da Dn D2 3 5 6 8 यदस्मान्, T2 यन्मा त्वं (for यद्यन्मां) D4 8 वक्ष्यति (for °सि) K1 यद्येमा प्रविवक्ष्यसि; D7 T1 G M यन्मां (G2 M °न्मा) विप्र प्रवक्ष्यसि

23 D8 om the ref D4 कालक (for मुनिर्) — $^{a}$) D7 T1 G3 4 विद्वान्. T2 विद्वन् (for ज्ञात्वा). K1 3 5 B0 1 3-5 D2 3. 5 8 ज्ञात्वा पापा(K1 orig नया) नपापाश्च, V1 B2 Da Dn D6 ज्ञात्वानघानघाश्चापि, G1 विद्वानापायापायांश्च (sic), G2 विद्वन्नयान्नपानाश्च, M1-3 विद्वन्नयानपनयान् (M3 °यन्); M2 विद्वान्नयान्नपानयाश्च (hypermetric) — $^{b}$) D7 S भयाख्यातृन् (for भृत्य तस्ते) Ca cites भृत्यतः (as in text) B1 भवानि च, M1 3 4 भयान(M4 °न्य)पि (for °नि च). — $^{d}$) Ś1 (marg by corr) K1 2 4 आगमत्, D7 T1 G1 3 4 M1 3. 4 आगत (G3 °ता) (for °मम्)

24 $^{a}$) K1 [उ]क्त च, K1 m 2 3 5 V1 B Da Dn D2-6. 8 G2 M2 [उ]क्तस्तु, T2 G1 [उ]क्त तु (for [उ] क्तश्च) D7 T1 G3 4 M1 3 4 प्रागेवोक्तं तु दोषाय — $^{b}$) B1 D7 S -सेवनं (for सेविनाम्). — The portion from 24$^{c}$ up to the end of adhy 89 is lost in B1 on missing fol D8 om (hapl) 24$^{c}$-26$^{b}$. — $^{c}$) K1 (marg by corr.) Da अगतीनां, B0 2-5 Dn1 D3. 5 आगतीक; D2 आगतार्कं, D7 T1 G2 4 आगतेः कु; T2 G1 M अगति कु, G3 अगति का (for °तीक). K1 एषा; M1 3 येषां Cv अगता कुगतिर्येषां — $^{d}$) D4 lacuna, M1 3 4 सा (for या) K5 V1 B0 3-5 Dn2 D3 6 पापा राजो(D3 °ज्ञो)पजीविका (B3 °ता), B2 Da राज्ञां साहसजीविका; Dn1 D6 पापा राजोपसेविनां, D2 या राज्ञो॰पजीविका

25 B1 missing, D8 om 25 (for both, cf v l. 21) D6 om 25$^{a}$-26$^{b}$ — $^{b}$) D7 T1 G2-4 सगम (for संगत) — $^{c}$) K1 तु (for च). — $^{d}$) K5 D5 तथैव ह, G4 भवति च

26 B1 missing (cf v l 24). D6 8 om 26$^{ab}$ (cf. v l 25, 24) — $^{b}$) K1 राज्ञोप (for राजोप) K5 Da Dn1 D3 5 जीविना (for सेविनाम्) — $^{c}$) K5 B2 3 Da Dn2 D6 तथैषा, V1 अथैव; Dn1 तथैव, D5 अप्येषा, D7 S अथास्य (for अथैषाम्) K1 एव ते; K3 5 V1 B (B1 missing) D (D1 missing) S राजतो (for एकतो) — $^{d}$) D4 भी च वन् (sic) (for भीर्भवेत्) D7 S मुहूर्तादागत भय

27 B1 missing (cf v l 24) — $^{a}$) K1 (marg. as in text) नैवातेन (for नैकान्तेन). K1 [अ]प्रसादो; D6 G2 M1 3 प्रमादो (for [अ]प्र°) — $^{b}$) All MSS (except Ś1 K1 4, B1 D1 missing) transp कर्तुं and शक्यो (G1 °क्य). K3 D5 महीपते. — $^{c}$) M2-4 हि (for तु) K1 (marg as in text) D4 प्रसाद (for प्रमाद).

28 B1 missing (cf v l 24). — $^{a}$) K1 (marg as in text) प्रसादाद् (for प्रमा°) K3 D4 राज्ञि, K4 राज्य (for राजा) D7 T G M2 प्रमादात्स्खलते बुद्धिः; M1 3 4 °त्स्खलिते राजन् — $^{b}$) M1 3 4 मुहूर्तादागतं भय (cf. 26$^{d}$). — D4 om 28$^{c}$-29$^{b}$ — $^{c}$) D7 T G M1-3 उपासीत (for इवासीदेद्). M4 अग्निं वैश्वानरमिव. — $^{d}$)

आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम् ।
यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः ॥ २९
दुर्व्याहृताच्छङ्कमानो दुष्कृताद्दुरधिष्ठितात् ।
दुरासिताद्दुर्व्रजितादिङ्गितादङ्गचेष्टितात् ॥ ३०
देवतेव हि सर्वार्थान्कुर्याद्राजा प्रसादितः ।
वैश्वानर इव क्रुद्धः समूलमपि निर्दहेत् ।
इति राजन्यमः प्राह वर्तते च तथैव तत् ॥ ३१
अथ भूयांसमेवार्थं करिष्यामि पुनः पुनः ।
ददात्यसद्विधोऽमात्यो बुद्धिसाहाय्यमापदि ॥ ३२
वायसश्चैव मे राजन्नन्तकायाभिसंहितः ।
न च मेऽत्र भवान्गर्ह्यो न च येषां भवान्प्रियः ।
हिताहितांस्तु बुध्येथा मा परोक्षमतिर्भव ॥ ३३
ये त्वादानपरा एव वसन्ति भवतो गृहे ।
अभूतिकामा भूतानां तादृशैर्मेऽभिसंहितम् ॥ ३४
ये वा भवद्विनाशेन राज्यमिच्छन्त्यनन्तरम् ।
अन्तरैरभिसंधाय राजन्सिध्यन्ति नान्यथा ॥ ३५

C. 12. 3090
B. 12. 82. 35
K. 12. 82. 36

---

T2 G1 M1-3 इव ( for उप ) D7 -शिक्षत॰, M1-3 बुद्धिमान् ( for -शिक्षित॰ )

29 B1 missing (cf v 1 24) D4 om $29^{ab}$ (cf. v 1 28) —$^{c}$) Da यत्नेन, M2 यतेन (for यत्नेन) —$^{d}$) Ca cites नाहमस्मीति (as in text) D4 माधव॰, D3 वा नत्र॰, M1 मानव; M2 मानवा Cv as in text

30 B1 missing (cf v 1 24) —$^{a}$) D8 दुर्व्याहताच् Ś1 K2 शकमाणो —$^{b}$) K3 5 V1 B (B1 missing) Da Dn D2-6 8 T2 G2 4 M2 4 दुःस्थिताद्, D7 T1 G3 दुस्थिराद्, G1 दुस्थानाद्, M1.3 दुस्थिताद् (for दुष्कृताद्) D6 8 दुरधिष्ठितान्, M1.3 दुरपे( M3 °वे )क्षितात् — K1.3 om (hapl) $30^{cd}$ D4 reads $30^{c}$–$31^{f}$ after $33^{ab}$ —$^{c}$) B2 दुराशिताद्, D4 G1 °सीनाद्, D7 M1.3 °सनाद् (for °सिताद्) Ś1 K4 दैवजिताद्, D2 3 5 दुर्विजिताद्, D7 T1 G3.4 दुर्वृजिता (G3 °ना)द्, T2 G1 दुर्व्रजिनाद् (for °ताद्) —$^{d}$) Da -चेष्टितात्, D6 -चेष्टितान् D4 7 T G2-4 M इङ्गिता (D4 इङ्गित-, G3 अहिता)ध्यायिताद्पि, G1 इङ्गितार्थहिता°

31 B1 missing (cf v 1 24) For the sequence in D4, cf. v 1 30 —$^{a}$) K4 देवत एव, D4 तेन तेन हि, T2 बुद्धिमानपि Bo 3-5 D2 3 5 8 सर्वार्थं —$^{b}$) K3 प्रसादितं॰, G1 °रिता, M1 3 °दितं —$^{c}$) D8 क्रुद्धे —$^{e}$) K3 राजन्मया, K5 Da Dn1 °न्यम॰, D4 न्मनु, T2 M2 राज( M2 °ज )स्मय॰, G1 राजा स्मयन्, M1.3 4 राजनि यत् (for °न्मय॰) D7 T1 G3 4 प्राह यश्च, G2 प्रभावाश्च (for मय॰ प्राह) M4 प्राहु (for प्राह) —$^{f}$) D4 न (for च) Da M1 च (for तत्)

32 B1 missing (cf. v 1 24) For the sequence in D4, cf. v 1 30 —$^{a}$) D7 S अत्र (for अथ) Ś1 K1 4 भूयांस (for °सम्) K5 D2 3 5 8 एवाह (for °र्थं) Cnp अह (for अर्थं) —$^{b}$) Ś1 K1 करिष्याम॰ (for °ष्यामि) —$^{c}$) V1 B2 दद्याद्, D5 तदाति, G4 दधाति (for ददाति) K1 [अ]सद्विधा, V1 B2 Da [अ]स्मिन्हि यो; D6 [अ]साद्विधो —$^{d}$) Ś1 K1 (m as in text) 2 4 साहाय्यसपदि (for °मापदि)

33 B1 missing (cf v 1. 24) —$^{a}$) K3 5 B3 Dn2 M1.3 4 स्वेष; V1 Bo 2 4 5 Da Dn1 D2 3 6-7 T G M2 स्वेव, D8 स्व च (for चैव) D4 वायसो हि महाराजन् —$^{b}$) Ś1 K1.5 Da2 Dn ननु कार्याभि; K2 3 अतिकायाभि, B5 अत्तकार्याभि, D2 3.5 तव कार्याभि (for अन्तकायाभि) T2 -सहव॰; G1 सश्रित॰ (for सहित॰) V1 Bo 2-4 Da1 D6 3 न तु (V1 अभि) कार्याभिसहित (V1 °ता) — After $33^{ab}$, D4 reads $30^{c}$–$31^{f}$ and repeats $32^{a}$–$33^{b}$ thereafter —$^{c}$) Ś1 K1.2 ग्राह्यो, K4 5 V1 B (B1 missing) Da2 D2 3 5 8 दुह्यो, Da1 D4 गुह्यो, Dn2 गृह्यो, D7 T1 G3 4 भक्तो, M4 गार्ह्यो (for गर्ह्यो) —$^{d}$) Ś1 K1.2 4 मेत्र, Dn1 D6 तेषां, M3 एषां (for येषां) G1 न येषा भगवान्प्रिय —$^{e}$) Ś1 K1 4 च (for तु) K1 बुद्धेथा, T2 बुद्ध्या वा —$^{f}$) K6 भवे, B2 3 Da Dn1 भवे॰, Dn2 D4 भवेत् (for भव)

34 B1 missing (cf v 1 24) —$^{a}$) K4 स्वां दान, K5 D2 3.5 च दान, G1 स्वदान (for त्वा दान) D7 T1 G2-4 ये च (for एव) —$^{b}$) K4 नमति (for वसन्ति) —$^{c}$) Ś1 K1 4 अभूतिकामैर् (for °कामा) —$^{d}$) V1 मेभिसहितै॰, D4 मे न सगति॰, D7 T1 G3 4 मासिसंहिता॰ (T1 G4 °त॰), T2 G1 मेविसहता॰ (G1 °हित), G2 भूतिसहित॰ (for मेऽभिसंहितम्)

35 B1 missing (cf v 1 24) —$^{a}$) Dn1 यो वा, G1 एता (for ये वा) D7 S तव (for भवद्) —$^{b}$) K2-4 Bo 4 5 Dn D2 4.7 इच्छति, Da ऐच्छस्तु

C. 12 3091
B 12 82 36
K 12 82 37

तेषामहं भयाद्राजन्गमिष्याम्यन्यमाश्रमम् ।
तैर्हि मे संधितो बाणः काके निपतितः प्रभो ॥ ३६
छद्मना मम काकश्च गमितो यमसादनम् ।
दृष्टं ह्येतन्मया राजंस्तपोदीर्घेण चक्षुषा ॥ ३७
बहुनक्रझषग्राहां तिमिंगिलगणायुताम् ।
काकेन बडिशेनेमामतार्षं त्वामहं नदीम् ॥ ३८
स्थाण्वश्मकण्टकवतीं व्याघ्रसिंहगजाकुलाम् ।
दुरासदां दुष्प्रवेशां गुहां हैमवतीमिव ॥ ३९
अग्निना तामसं दुर्गं नौभिराप्यं च गम्यते ।
राजदुर्गावतरणे नोपायं पण्डिता विदुः ॥ ४०
गहनं भवतो राज्यमन्धकारतमोवृतम् ।
नेह विश्वसितुं शक्यं भवतापि कुतो मया ॥ ४१
अतो नायं शुभो वासस्तुल्ये सदसती इह ।
वधो ह्येवात्र सुकृते दुष्कृते न च संशयः ॥ ४२
न्यायतो दुष्कृते घातः सुकृते स्यात्कथं वधः ।
नेह युक्तं चिरं स्थातुं जवेनातो व्रजेद्बुधः ॥ ४३

---

(for इच्छन्ति) V1 राज्यमैच्छदमतर, B2 °मिच्छंस्तदं तर — $^{c}$) K3-5 V1 B (B1 missing) Da Dn D2-6 8 G1 आंतरैर् D7 T G अपि (for अभि) Cv as in text — $^{d}$) D7 T1 G1 3 4 M1 3. 4 राज्ञ (for राजन्) K2, 3 5 V1 B (B1 missing) Dn D2 3 5 6 सिध्यति (for सिध्यन्ति) V1 B0 2 5 m Da Dn1 D6 7 S चान्यथा (for ना°)

36 B1 missing (cf v 1 24) — $^{a}$) G3 येषाम् (for तेषाम्) — K3 om (hapl.) $36^{b}$–$37^{a}$ G4 om $36^{c}$–$39^{b}$. V1 reads $36^{b}$–$37^{c}$ on marg — $^{c}$) T2 G1 एतैर्हि (for तैर्हि मे) B2 Da संहितो (for संधितो) — $^{d}$) Ś1 K4 काको D4 न पतित (for निप°). T2 काको मम निपातित

37 B1 missing (cf v 1 24) K3 om $37^{a}$, G4 om. 37 (for both, cf v 1 36) V1 reads $37^{abc}$ on marg — $^{a}$) B2 दमना (for छद्मना) D7 T1 G3 कामश् (for काकश्) K5 B (B1 missing) D2 3 5 8 स (for च). K2 V1 Da Dn D6 छद्मकामैरकामस्य. — $^{b}$) K1 (by corr) °साधनं (for °सादनम्) — $^{c}$) D4 महाराजंस् (for मया राजस्) — $^{d}$) K1 3 Dn2 D6 M1 तपोदीर्घेन, D7 S (G4 om) पुरा दीर्घेण (for तपोदी°)

38 B1 missing (cf v 1 24) G4 om 38 (cf v. 1 36) — $^{a}$) G1 बहुना तु (for °नक्र-) K1 D3 -झषग्राहा, K4 °ग्राह-, D4 °ग्राह्यं (for °ग्राहां) — $^{b}$) K1 गणायुतान्, D5 गलायुता, D3 -गणायुत; G2 °वृता, M °कुलां (for °युताम्) — $^{c}$) Ś1 K1 2 5 V1 B2 Da Dn D6-8 S (G4 om) Cv बालिशेन (for बडिशेन) K4 V1 B2-5 Da D2 3 5 [ए]व (for [इ]माम्) — $^{d}$) K1 अभार्षं त्वाम्, K1 m अवतीर्षम्, K2 4 5 V1 B (B1 missing) Da Dn D6 8 यामता (V1 °त) र्षम्, K3 D4 अतितीर्षम् (for अतार्षं त्वाम्) D2 3, 5 यामततुं महानदीं, D7 S (G4 om) अतार्षमहमापगा

39 B1 missing (cf v 1 24) G4 om $39^{ab}$ (cf v 1. 36). — $^{a}$) K1 स्थाणु स, K4 स्थाणूश्म, D3 स्थाणुश्च (for °ण्वश्म-) D4 6 -कंटकवती — $^{b}$) V1 B (B1 missing) -समाकुला (for गजा°) K5 Da Dn D2 6, 8 सिंहव्याघ्रसमाकुला — $^{c}$) K2 4 दुष्प्रवेगां; K5 V1 B (B1 missing) Da Dn D2 3 5 6 8 दुष्प्रसहां; D7 S दुष्प्रधर्षां (for °वेशां)

40 B1 missing (cf v 1 24) — $^{b}$) K4 आप्त (for आप्य) — $^{d}$) M2 गोपायं (for नो°)

41 B1 missing (cf v 1 24) — $^{b}$) K2 3 5 V1 B (except B4, B1 missing) Da Dn D2 4 6-8 S अंधकार (V1 °रे) (for °कार-) K5 V1 B (B1 missing) Da Dn D2 3 5 6 8 तमोन्वितं (for तमोवृतम्) Ca अंधकारं तमोवृतम् — $^{c}$) D4 6 न हि (for नेह) K1 B0 M4 विश्वसितं (for °सितु) — $^{d}$) K1 भवतो हि, G1 (before corr) M1 3 °तोपि (for °तापि)

42 B1 missing (cf v 1 24) — $^{a}$) Da नाह Ś1 K4 मतो, Ś1 m सुभो, K1 मते, B3 शुभौ, B4 सुखो (for शुभो) Da गुहावासस्, T3 शुभोदर्कस् (for शुभो वासस्) — $^{b}$) B2 सदसतां, G1 °सिती (for °सती) Ś1 K1-4 V1 B (B1 missing) Da D4 7 T1 G M स्विह, Dn2 वह (for इह) T2 स भवेत्सदसि त्विह — $^{c}$) K4 बुधो (for वधो) D7 T1 G1 3 4 ह्येवेह, T2 °ते वा (for °वात्र) D6 Cv सुकृतो — $^{d}$) K3 B2-4 Dn1 D3 4 T G1 3 4 च न, G2 नैव (for न च)

43 B1 missing (cf v 1 24) — $^{a}$) K3 T2 दुष्कृतो. D5 पात (for घात°). — $^{b}$) K3 5 V1 B (B1 missing) Dn D5 6 3 न; Da च (for स्यात्) K1 कथ क्षय°; K3-5 V1 B (B1 missing) Da Dn D6 8 कथंचन, D2 3 कथ नु स, D4 कथं बंध°; D6

सीता नाम नदी राजन्प्लवो यस्यां निमज्जति ।
तथोपमामिमां मन्ये वागुरां सर्वघातिनीम् ॥ ४४
मधुप्रपातो हि भवान्भोजनं विषसंयुतम् ।
असतामिव ते भावो वर्तते न सतामिव ।
आशीविषैः परिवृतः कूपस्त्वमिव पार्थिव ॥ ४५
दुर्गतीर्था बृहत्कूला करीरीवेत्रसंयुता ।
नदी मधुरपानीया यथा राजंस्तथा भवान् ।
श्वगृध्रगोमायुयुतो राजहंससमो ह्यसि ॥ ४६
यथाश्रित्य महावृक्षं कक्षः संवर्धते महान् ।
ततस्तं संवृणोत्येव तमतीत्य च वर्धते ॥ ४७
तेनैवोपेन्धनो नूनं दावो दहति दारुणः ।
तथोपमा ह्यमात्यास्ते राजंस्तान्परिशोधय ॥ ४८
भवतैव कृता राजन्भवता परिपालिताः ।
भवन्तं पर्यवज्ञाय जिघांसन्ति भवत्प्रियम् ॥ ४९
उषितं शङ्कमानेन प्रमादं परिरक्षता ।
अन्तःसर्पे इवागारे वीरपत्न्या इवालये ।

C 12. 3106
B 12. 82. 51
K 12. 82. 52

---

स विद्यते, T2 वध कर्य (by transp.), M2 कय वध — c) M1 स्नेह- (for नेह) K2 4 5 B3 Dn1 D2 3 5 6 8 G- स्थिर, Da चिर (for चिर) — d) K1 (marg. as in text) [ग]तोऽब्रवीद्, K2.-5 Bo 3-5 Dn D2 3-6 8 [प्]लवामज्जेद्, V1 B2 Da [प्]लव मज्जेद्, D- T1 G [ट]त नदीद्, T2 विनदेद्, M [क्ष]तो नदेद् (for [क्ष]तो मज्जेद्) D2 वध- (for बुध-)

44 B1 missing (cf. v. l. 24) — a) K3 B- D3 6 शीता, D1 मिता — b) B2 पुरो (for प्लवो) K4 D2 यस्या, V1 नामा (for यस्यां) D5 अप्लुतोम्या निमज्जति — c) D1 T G3 4 तथोपमाम् (for तथो°) — d) D5 सर्ववातिनी

45 B1 missing (cf. v. l. 24) — a) D1 8 -प्रतापो, D5 प्रयातो, D7 T1 G2 M1 3 प्रमाते, T2 G3 4 M1 प्रपाते, M2 प्रतापे (for प्रपातो) G2 भयान् (for भवान्) — b) D1 भाजन (for भो°) M2 विघ्न (for विष) — V1 reads 45c–46b on marg. — c) D1 असत्यम् (for °ताम्) — e) D1 परिवृते — f) G1 कृतम् (for कूपस्) K2 3 V1 B (B1 missing) Da Dn D2 3, 5–8 T G M1 असि; K2 इह (for इव) D1 कूपेष पतितस्त्वया — After 45, D1 ins.:

202* क्रियावृत्ति परिवृत्य य वा गच्छति दुःखित ।
तथाहं काकवातेन कृतस्त्वमपि पार्थिव ।

46 B1 missing (cf. v. l. 24) V1 reads 46ab on marg. — a) D1 दुर्गतीर , Ca °तीर्था (as in text) D2 -काला (for कूला) — b) K2 B2 4 5 Da D2 5 करीरा, K3–5 B3 Dn D2 6 8 कारीरा; V1 गभीरा, Bo करीर, D1 कारीरी (for करीरी) D7 S कावेरी घोरसंवृता — c) D2 3 8 यथा (for नदी) D5 यथा च मधुपानीया — e) B2 श्व; G1 स (for श्व) D1 S -गोमायुवृतो (for °युतो) — f) D1 T1 G1 3 4 M1 3 4 राजहंसोपमो ह्यसि

47 B1 missing (cf. v. l. 24) — a) G1 यथा श्रुत्य (for °श्रित्य) D1 यथा वृक्षं समाश्रित्य, G4 M1 3 4 यमाश्रित्य (G1 °थाश्रित) महावृक्ष — b) V1 वृक्ष, D1 यक्ष- (for कक्ष) Da सवर्तते (for °धते) — c) K1 अतस् (for ततस्) — d) D2 3 तेनैव सह, T2 G1 समतीत्य च; M परिवार्य च (for तमतीत्य च) Da वर्तते (for वर्धते)

48 B1 missing (cf. v. l. 24) — a) B2 damaged, K1 2 [उ]पे (K2 °पो)धनो, K4 [उ]पेंधने (for °धनो) K3 Bo 3-5 D2-7 T1 G M1-3 तेनैवोपे(Dn2 °वाप, D2 3 5 °घोप)धनेनेत्र (B3 °नेदं; Dn2 D6 T2 G1. 2 M2 °नैनं, D1 T1 G3 4 M1 3 °नेम), K5 D5 °वायुल्वणे (D5 °ण)नैव, V1 °वोपेंधमानो हि; Da °वापिंधनेनैन, Dn1 °वोप्रेंधनेनैन, T2 M4 तेनैव चेंधनेनैन (M4 °नेम) — b) K1 दाहो (for दावो) — c) D1 ततोपमा — d) K1 (m. as in text) मा, D1 तत् (for तान्) Da om. from परि up to भवता (in 49b) V1 -शोधये-.

49 B1 missing (cf. v. l. 24) Da om. up to भवता (cf. v. l. 48) — a) K5 V1 Dn D6 त्वया चैव; B2 damaged, B3 त्वया तैव, D5 तव सैव; M2 भववोप (for तैव) — b) G1 परिवाहिता (for °पालिता) — c) K4 परिवज्ञाय (for पर्य°) K5 V1 B (B1 missing) Da Dn D2 3 5 6 8 भवतमभि सधाय — d) G1. 3 जिर्वासर्त D7 S (except T2 G1) प्रियान् (for -प्रियम्)

50 B1 missing (cf. v. l. 24) — b) K1 प्रसादं; M4 प्रमाद- V1 D6 परिरक्षिता (D6 °ता) — c) K3 सर्पा; G1 सर्वे K1 इवागारो — d) Ś1 K4

C 12 3107
B 12 82 51
K 12 82 52

शीलं जिज्ञासमानेन राज्ञश्च सहजीविना ॥ ५०
कच्चिज्जितेन्द्रियो राजा कच्चिदभ्यन्तरा जिताः ।
कच्चिदेषां प्रियो राजा कच्चिद्राज्ञः प्रियाः प्रजाः ॥ ५१
जिज्ञासुरिह संप्राप्तस्तवाहं राजसत्तम ।
तस्य मे रोचसे राजन्क्षुधितस्येव भोजनम् ॥ ५२
अमात्या मे न रोचन्ते वितृष्णस्य यथोदकम् ।
भवतोऽर्थकृदित्येव मयि दोषो हि तैः कृतः ।
विद्यते कारणं नान्यदिति मे नात्र संशयः ॥ ५३
न हि तेषामहं द्रुग्धस्तत्तेषां दोषवद्गतम् ।
अरेर्हि दुर्हृताद्भेयं भग्नपृष्ठादिवोरगात् ॥ ५४

राजोवाच ।

भूयसा परिबर्हेण सत्कारेण च भूयसा ।
पूजितो ब्राह्मणश्रेष्ठ भूयो वस गृहे मम ॥ ५५
ये त्वां ब्राह्मण नेच्छन्ति न ते वत्स्यन्ति मे गृहे ।
भवतैव हि तज्ज्ञेयं यदिदानीमनन्तरम् ॥ ५६
यथा स्याद्दुष्कृतो दण्डो यथा च सुकृतं कृतम् ।

---

क्रूरपत्न्या (for वीर°) —ᶠ) Ś1 स (for च) K V1 B (B1 missing) Da Dn D2–6 8 M1 3 4 राज्ञश्च (K1 D4 M1 3 4 °ज्ञ स; K2 3 °ज्ञ· स्स) सहजीविन (K3 °नां; Da °नं), D7 T G M2 राज्ञ (G1 °ज्ञा) साहस जीवि(T2 °व)न·

51 B1 missing (of v l 24) —ᵃ) Ś1 K1 Dn2 G1 कश्चिज् —ᵇ) Ś1 K1 D4 कश्चिद् K2–5 V1 B0 3–5 Dn D2–6 8 S अस्यांतरा (V1 °रो); B2 Da अस्य मरा, D7 अत्यतरा (for अभ्यन्तरा) Ś1 K1 जित —ᶜ) Ś1 K1 कश्चिद् D7 S आसा (for एषां) —ᵈ) Ś1 कश्चिद् G2 M2 प्रजा प्रिया· (by transp). K1 2 कश्चि(K2 °च्चि)देवाप्रिय प्रजा·

52 B1 missing (of v l 24) —ᵃ) K4 प्राप्तस् (for संप्राप्तस्) K2 3 5 V1 B (B1 missing) D (except D7; D1 missing) T2 G1 2 M त्रिजिज्ञासुरिह (G1 °य) प्राप्तस् —ᵇ) K1 B4 D3 राजसत्तम (D8 °म) —ᶜ) D4 स त्व (for तस्य). K3–5 V1 Da Dn D6–8 T2 G2 M1 3 रोचते (for °से)

53 B1 missing (of v l 24) —ᵇ) K1 वितृष्णस्येव नोदक —ᶜ) K2–5 B (except B2, B1 missing) Dn D2 3 5–8 T G2–4 M2 इत्येवं (for °व) —ᵈ) D2–6 मम (for मयि). D7 S मयि ते (T2 अभीष्टे) दोषमादधन् (M2 °धत्, M4 °धु·). —ᶠ) B2 D7 T1 G3 नास्ति (for नात्र)

54 B1 missing (of v l 24). —ᵃ) K4 B3 Da Dn D6 G2 च (for हि) Ś1 K4 V1 B0 2 क्रुद्धस्, K1 श्रद्धस्; K3 दु·खस्; D6 दुग्धस्, D7 S द्रो(T2 G1 दो)ग्धा (for द्रुग्धस्). —ᵇ) T G1 3 4 तत्रैषां, Cv तत्तेषां (as in text). K5 V1 B (B1 missing) Da Dn D2 3 5 6 8 दोषदर्शनं; D7 T1 G3 4 Cv द्रोहवद्गतं; T2 G1 M1 3 4 दोषमुद्गतं, M2 °मुद्गत (for वद्गतम्). —ᶜ) D7 T1 G2–4 अग्रे हि; T2 अरेश्च (for °र्हि) K (except K1) V1 B (B1 missing) Da Dn D2 3 5 6 8 दुर्द्धदा(D6 °सा)न्नेयं, D4 दुर्हिता°; D7 T1 G1 2 4 M2 दुर्हृदो हेय (D7 G2 योह); T2 दुर्वृत्तो भेद, G3 दुर्हृदेयेह (sic); M1 3 4 दुर्हृतो भे(M4 °दो दे)यं (for दुर्हृताद्भेयं) —ᵈ) K1 m G4 भग्नपुच्छाद् (for °पृष्ठाद्). K4 G3 इवोरग (G3 °गा) (for °गात्).

55 B1 missing (of v l 24) D3 om the ref —ᵃ) All MSS (except Ś1 K1–4, B1 D1 missing) परिहारेण (for °बर्हेण) —ᵇ) K4 शकरेण, G1 सत्का° (for सत्का°). —ᶜ) M2 भूयसो (for पूजितो) K2 4 -श्रेष्ठो (for श्रेष्ठ). —ᵈ) K2 4 बहु (for भूयो). G2 M2 transp वस and मम

56 B1 missing (of v l 24) —ᵃ) T2 G1 M त्वा (for त्वां) —ᵇ) K5 V1 B (B1 missing) Da Dn D2 3 5 6 8 ते न (by transp), D7 S (except M2 4) न मे B2 4 मद्·; D7 S (except M2 4) ते (for मे) —ᶜ) K4 भवतैप; D4 M4 °तेव V1 D3 T2 G1 M2 त (for तज्) —ᵈ) Dn तदेषाम् (for इदानीम्).

57 B1 missing (of v l 24) —ᵃ) B2 G2 यदा (for यथा) K1 Da Dn1 सुकृतो, K1 m स्वधृतो, K2 दुष्कृते; K3 सु*तो, K5 V1 B (B1 missing) Dn2 D2 3 5–8 S सुघृतो; D4 प्रकृतो (for दुष्कृतो) —ᵇ) K3 D4 स्यात्, D3 वत् (for च) D7 T1 G2–4 सुकृतो (for °त) K3 तथा, V1 D7 S भवेत् (for कृतम्) —ᶜ) Da यथा (for तथा) Ś1 K1 निरीक्ष्य (for समीक्ष्य) M2 भवत; M4 भगवान्· —ᵈ) K5 D3 5 8 श्रेयसा (for °से) G1 हि नियुंक्ष्व; M1 3 4 प्रति° (for विनि°). K1 तां; M3 मा (for माम्).

प्रतिभोगसुखेनैव कोशमस्य विरेचय ॥ १६
यज्ञदानप्रशंसास्मै ब्राह्मणेष्वनुवर्ण्यताम् ।
ते त्वत्प्रियं करिष्यन्ति तं चेष्यन्ति वृका इव ॥ १७
असंशयं पुण्यशीलः प्राप्नोति परमां गतिम् ।
त्रिविष्टपे पुण्यतमं स्थानं प्राप्नोति पार्थिवः ।
कोशक्षये त्वमित्राणां वशं कौसल्य गच्छति ॥ १८
उभयत्र प्रसक्तस्य धर्मे चाधर्म एव च ।
बलार्थमूलं व्युच्छिद्येत्तेन नन्दन्ति शत्रवः ॥ १९
निन्द्यास्य मानुषं कर्म दैवमस्योपवर्णय ।
असंशयं दैवपरः क्षिप्रमेव विनश्यति ॥ २०
याजयैनं विश्वजिता सर्वस्वेन वियुज्यताम् ।
ततो गच्छत्वसिद्धार्थः पीड्यमानो महाजनम् ॥ २१
त्यागधर्मविदं मुण्डं कंचिदस्योपवर्णय ।
अपि त्यागं बुभूषेत कच्चिद्दुच्छेदनामयम् ॥ २२
सिद्धेनौषधयोगेन सर्वशत्रुविनाशिना ।
नागानश्वान्मनुष्यांश्च कृतकैरुपघातय ॥ २३

C. 12. 3927
B 12. 105 24
K. 12. 105 22

---

त्रिरोचिता, V1 B Da Dn2 D2 3 5 6 8 विरोधिता ( D6 °ना ), D4 G1 M1. 3. 4 विरुद्धता ❁ Cv यथा नदी भतिविरोधे सति पार्श्वगो गच्छति तथा त्वयापि कर्तव्यम् । ❁

16 b ) B1 [अ]शनानि ( for [आ]न° ) — c ) D7 S प्रीति ( for प्रति ) K3 -सुख्येन, Da D5 7 S -सुखेन ( for -सुखेन ) — d ) Some MSS कोपम् K3 4 5 D5 8 T2 G1-3 विरोचय ( K3 4 °ये ), Da विरोधय

17 a ) K4 5 V1 Bo 1. 3-5 Dn D3-8 S यज्ञदाने ( V1 D4 °न ); B2 Da यज्ञ दान K5 V1 B Da Dn D2 3 5 6 8 प्रशा( Dn2 D5 °सा )घ्यस्मै ( for प्रशासास्मै ) — b ) K1-3 5 V1 B Da Dn D2 3 6-8 S ब्राह्मणान् ( for °णेषु ) K1. 2. V1 B Dn D2 3 5 6 8 अनुवर्ण्य ( B4 °वय ) तान्, Da °यधनात्, D7 T2 G1. 3 4 °वर्तय ( T2 G1 °यन् ), T1 M वर्णयन् ( T1 °य ) ( for °वर्ण्यताम् ) — c ) K3 5 V1 B Da Dn D2 3. 5 6 8 त्वा प्रति-, D4. 7 S त्वा( D4 M2-4 त्वा )प्रियं ( for त्वत्प्रिय ) — d ) D7 T2 G2-4 तन् ( for तं ) K3 8 D4 वैष्यति, K5 V1 B Da Dn D2 3 5 6 8 मो( B5 भ )क्ष्यति, D7 S छे( M3 जे, M4 जै )ष्यति ( for चेष्यन्ति )

18 a ) D5 असदाय — D4 om 18cd D8 om 18cdef — c ) B1. 2 त्रिपिष्टपे D7 S पूज्यतम ( for पुण्य° ) — d ) K3 4 M1-3 पार्थिव, K5 V1 B Da Dn D2 3. 5 6 मानव°, D7 T G शाश्वतं — e ) Some MSS कोपक्षये — f ) K5 वशां, M2 मश K3 5 V1 B D2-6 कौश( B4 °प )ल्य G1 गच्छसि

19 Dn2 om 19ab — a ) K5 प्रशक्तस्य; G3 प्रस क्तेस्य; M1. 3 °क्त स, Bom. ed. प्रयुक्तस्य — b ) K3 D2 3. 5 T2 G1 वा ( for the first च ) T2 वा ( for the second च ) — c ) V1 बलाच, B1-3 Da D7 फ( D7 य )लार्थं, Dn D2 3 5 6 8 फलार्थं, D4 धनार्थं, T1 G2 फलार्थी, T2 यलार्च ( for °र्थं ) Ś1 K1. 4 उ( Ś1 चो )च्छिद्येत्, D8 5 7 व्युच्छिद्यात्, S उच्छिद्यात् ( M2 °स् ) Bo 4. 5 मूल फलार्थमुच्छिद्येत् — d ) B1 Dn2 निं( Dn2 न )दति, T1 G2-4 जीवति; T2 G1 नश्यति

20 a ) K1 निंदास्य ( sic ), K3 V1 Da D4. 7 S निंदास्मै, K5 B4 D2 3 5 6 8 निंदन्वै, Bo-3 5 निंदान्वै; Dn न चास्मै ( for निन्द्यास्य ) K3 मानस ( for मानुष ) — b ) K3 4 चैवम्, D7 देवम् ( for दैवम् ) — d ) Bo 5 प्रशाम्यति ( for विनश्यति ).

21 a ) D6 याजयेत, T2 योजयैन — b ) M1. 3 सर्वं स्वेन ( for सर्वस्वेन ) V1 D2-6 वियुज्य त — c ) K5 गच्छ सुसिद्धार्थं, B1 D2 3 5 6 8 गच्छसि सि°, Dn °स्यसि°, D7 T2 G °त्वसिद्धार्थं — d ) B3 D2 3 5 6 8 पीड्यमान, D7 T G पीडमानो ( D7 T2 G1 °यानो ), M भिक्षमाणो Ś1 K5 Dn महावन, D4 जनान् ( for महाजनम् )

22 a ) K5 V1 B Da Dn D2 3 5 6 8 M2 योग; T2 G1 त्याग ( for त्याग- ) K3 M1 3 धर्ममिम; K5 V1 B2 4 D4 ( also as in text ) T1 G2-4 M2 4 °मिद; D7 °विध, T2 G1 धर्मविधिं K3 5 V1 B D ( except D4, D1 missing ) S पुण्य; K4 दृढ ( for मुण्ड ) — b ) K4 V1 Bo-2 4 Da Dn1 किंचिद्, D2 कच्चिद्; D3 5 6 कश्चिद् B5 अन्योप ( for अस्योप ) K3 Dn1 वर्णयेत्; K5 V1 Bo 3. 5 °ये; B1. 4 Da D7 °ये — c ) D4 अति- ( for अपि ) Ś1 बुभूपेच; K4 °पेश्च ( for °पेत ) — d ) K1 D7 कचिद्, B1 G2 किंचिद्, Da कचित्, D5 T G3 4 M कश्चिद् ( for कच्चिद् ) Ś1 अनाश्रयं; K4 °श्रम ( for °मयम् )

23 a ) K3 4. 5 V1 Bo 2 3 5 Da Dn D8 [औ]षधियोगेन, G3 8 °धर्मोगेन — b ) D7 S सत्व ( for

C 12. 3928 B 12 105. 25 K 12 105 23

एते चान्ये च बहवो दम्भयोगाः सुनिश्चिताः । शक्या विपहता कर्तुं नक्लीबेन नृपात्मज ॥ २४

इति श्रीमहाभारते शान्तिपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

## १०७

राजपुत्र उवाच ।

न निकृत्या न दम्भेन ब्रह्मन्निच्छामि जीवितुम् ।
नाधर्मयुक्तानिच्छेयमर्थान्सुमहतोऽप्यहम् ॥ १

पुरस्तादेव भगवन्मयैतदपवर्जितम् ।
येन मां नाभिशङ्केत यद्वा कृत्स्नं हितं भवेत् ॥ २

आनृशंस्येन धर्मेण लोके ह्यस्मिञ्जिजीविषुः ।
नाहमेतदलं कर्तुं नैतन्मय्युपपद्यते ॥ ३

मुनिरुवाच ।

उपपन्नस्त्वमेतेन यथा क्षत्रिय भाषसे ।
प्रकृत्या ह्युपपन्नोऽसि बुद्ध्या चाद्भुतदर्शन ॥ ४

उभयोरेव सामर्थ्ये यतिष्ये तव तस्य च ।
संश्लेषं वा करिष्यामि शाश्वतं ह्यनपायिनम् ॥ ५

---

-शत्रु-) — c) D7 S गजान् (for नागान्) — d) K4 -घातक (sic), Dn1 घातयेत्.

24 b) B2 नय ; D1 दभा, M दंभ- (for दम्भ) K3 8 V1 B1 2 Da D4 7 T G M1-8 सुचिंतिता ; K6 Bo 8-5 Dn2 D2 8 5 6 8 °विस्तृ( D3. 5 °स्तृ )ता ; Dn1 °संचिता ; M4 °चित्रिता°. — c) Bo 8 Dn1 D2 8 5 8 विसहता, B1 D4 T2 विपह( D4 °हि )ता ; D6 निप हिता ; D7 विप्वहता ; G2 8 °निहिता°. Ś1 K1 4 हर्तुं (for कर्तुं) — d) K4 M2 नृपात्मज, M4 कथचन K5 V1 B Da Dn D2 8 5 6 8 पुरुषेण बुभूषता ( V1 B1-4 Dn कृतात्मना ; Bo 5 Da महात्मना )

Colophon · D1 missing. — *Sub parvan* Ś1 K V1 Bo 1 8-5 Da Dn D2-7 T2 G1, 2 4 M राजधर्म — *Adhy name* K1 8 5 V1 Bo-4 Dn1 D2-6 कालकवृक्षीयं ; B5 Da कालवृ( Da °क )क्षीय, M1 8 शत्रुकोशक्षपण ; M2 शत्रुकोपक्षपणोपायकथनं — *Adhy no* (figures, words or both) · K5 108, B1 95, B3, 4 Dn1 104, Da1 106 (as in text), Da2 105, D3, 8 102, D7 S 107. — *Śloka no.* Dn D8 25.

### 107

☞ D1 is missing for this adhy. (cf. v l. 12 79 28).

1 D8 om. the ref., K5 V1 Bo. 2-5 Da Dn D7 S राजोवाच (for राजपुत्र उ°) — a) M दंभेन (for दम्भेन). — b) K1 B3 जीवितं ; K2 B1 G2-4 वेदितुं. — d) B3 D6, 8 [ऽ]प्यय ; M3 ह्ययं (for ऽप्यहम्).

2 a) G3 भगवान्. — b) Ś1 K3 उपवर्णितं, Da अपवर्जिते ; T2 G1, 2 अपि वर्जित (for अपवर्जितम्). — c) K1 D4 मा नाति ; D7 T G M1 8 पाप न ; M3 4 मां ( M4 मा ) न वि (for मा नाभि). D7 T2 G1 शक्येत (for शङ्केत) — d) K2 4 5 Bo 2-5 Da Dn D2 8 5 6 8 येन ; D7 यत्वा, T2 यद्वत् (for यद्वा) D2 कृष्ण, T2 G1 कृत्स्न (for कृत्स्न)

3 a) K1 D7 S अ( K1 T2 G1 आ )नृशंसेन धर्मेण — b) D4 लोको D7 [ऽ]पि (for हि) D7 S जिजीविषे. — d) K4 नैत ; Dn1 न तत् (for नैतन्). K5 V1 Bo 8 4 Da Dn D2 8 5 6 त्वयि (for मयि)

4 b) Da -पुगव (for भाषसे) — Da om 4c-7d. — c) K1 प्रहृत्या ; B5 अकृत्या (for प्र°) K4 ह्युपपन्नो, D7 T1 G M1 8 [अ]भ्युप°, M2 चोप° (for ह्युप°). D8 T1 G3 4 [ऽ]सि (for ऽसि) — d) Ś1 हि, B2 4 Dn D2 8 5 6 G2 वा, D8 lacuna (for च) K B Dn2 D2 8 5 7 8 T2 G1 8 4 [अ]द्भुतदर्शन (G3 4 °नात्) ; Dn1 D6 G2 बहुदर्शनः (G2 °र्शिना) ; M [अ]द्भुतविक्रम (M4 °म)

5 Da om. 5 (cf v. 1 4) — a) D7 S साम्य ( M4 °म्य )र्थे (for चामर्थे) — c) K2 8 M2 वां ; Bo lacuna, B1 4 च ; G1 व ; G2 स्वा (for वा). — d) K8 D4 च (for हि) B1 [अ]नयापिनं, Dn2 °पायनं.

त्वादृशं हि कुले जातमनृशंसं बहुश्रुतम् ।
अमात्यं को न कुर्वीत राज्यप्रणयकोविदम् ॥ ६
यस्त्वं प्रव्रजितो राज्याद्व्यसनं चोत्तमं गतः ।
आनृशंस्येन वृत्तेन क्षत्रियेच्छसि जीवितुम् ॥ ७
आगन्ता मद्गृहं तात वैदेहः सत्यसंगरः ।
यथाहं तं नियोक्ष्यामि तत्करिष्यत्यसंशयम् ॥ ८

भीष्म उवाच ।

तत आहूय वैदेहं मुनिर्वचनमब्रवीत् ।
अयं राजकुले जातो विदिताभ्यन्तरो मम ॥ ९
आदर्श इव शुद्धात्मा शारदश्चन्द्रमा इव ।
नास्मिन्पश्यामि वृजिनं सर्वतो मे परीक्षितः ॥ १०
तेन ते संधिरेवास्तु विश्वसास्मिन्यथा मयि ।
न राज्यमनमात्येन शक्यं शास्तुममित्रहन् ॥ ११
अमात्यः शूर एव स्याद्बुद्धिसंपन्न एव च ।
ताभ्यां चैव भयं राज्ञः पश्य राज्यस्य योजनम् ।
धर्मात्मनां क्वचिल्लोके नान्यास्ति गतिरीदृशी ॥ १२
कृतात्मा राजपुत्रोऽयं सतां मार्गमनुष्ठितः ।
सुसंगृहीतस्त्वेवैष त्वया धर्मपुरोगमः ।
संसेव्यमानः शत्रूंस्ते गृह्णीयान्महतो गणान् ॥ १३
यद्ययं प्रतियुध्येत्त्वां स्वकर्म क्षत्रियस्य तत् ।

C. 12 3943
B 12. 106 13
K. 12 106 13

---

6 Da om 6 (cf. v l. 4) — a) Dn D2 तादृशं (for त्वादृशं) — c) Ś1 K1. 4 Bo 5 G1 [ऽ]नु- (for न) V1 B2 अमात्य के न कुर्वति — d) D5 om from राज्य up to आगन्ता (in 8a) K6 B1 राजन्, G1 राज्य (for राज्य-) D3 -कोविद

7 Da D5 om. 7 (cf. v l. 4, 6) — a) K6 V1 B Dn D2 8 6 8 प्रच्यावि( B1 °च्यधि )तो, D4 प्रव्राजितो T2 राष्ट्राद् (for राज्याद्) — c) V1 Dn1 आनृशंस्येन, B1 D6 7 T1 G1. 2 4 M अनृशंसे( D6 °स्ये )न D7 अ*शम्येन दत्तेन

8 D. om. आगन्ता (cf. v l. 6) — a) K1 आगतो मद्-, B1 गता मम, Dn1 आगतो मद्-, D4 अगताम (sic) (for आगन्ता मद् ) — b) D7 S सत्यविक्रम — c) K2 Dn D6 G1 अथाह Bo त्व, D1 T2 G1 M स (for त) — d) Dn2 करिष्यति

9 N (except D7, D1 missing) G1 om the ref — a) K1 अत, D3 तत्र (for तत) K3 आहूय (for आहूय) D4 विदेह — c) B1 त्व हि, D8 अह (for अय) K1 D3 4 T2 राजा (for राज ) — d) Da मया (for मम) K1 2 G1 विदिताय( K6 °ताय , G1 °ता ह्य )न्तरो मम

10 a) B1 तव (for इव) G1 (before corr ) शुद्धास्तु — b) Ś1 K1. 2. 4 निर्मलश्च (for शारदश्च) V1 B2 Da2 Dn यथा (for इव) — d) K1 [ऽ]थ (for मे) K4 Dn2 M4 परिक्षित (K4 °त), D4 परीक्षित

11 a) B1 [स्त]स्तां (for [अ]स्तु) — b) K1 B1 T2 G1 M1 विश्वासो( M1 °सा )स्मिन्, Da विश्वसेद Dn2 मम, D6 विधि (for मयि) — c) B3 न रामम्; Dn1 नाराज्यम् (for न रा°) D6 अनसायेन (for °मात्येन) — d) K2 V1 B1 2 Da Dn1 अपि स्यह, K3 D4 अमि( K8 °म )त्रक (for °त्रहन् )

12 a) V1 एव शूर (by transp ); D7 T G शुद्ध एव — b) Da Dn वा (for च) — c) D7 S तस्माच् (for ताभ्या) K2 8 6 V1 B Da Dn D2 8. 5 c, 8 [त]भय (for भयं ) Dn राजन्; D6 राज (for राज्ञ ) — d) K8 5 Da Dn D3-5 M राज्यप्र( Da2 °ज्य स )योजन (for राज्यस्य यो° ) — e) T1 G धर्मात्मना (G1. 2 °न ), T2 °दन्य, M3 °त्मानां — f) Da नाना( Da2 °त्मा )स्ति, G1 नान्यस्ति

13 a) K8 D4 तदात्मा, K6 V1 B1-5 Da Dn D2 3 5 6 8 महात्मा, Bo धर्मात्मा, D7 S तथा ( D7 T1 G3 4 °दा ) स (for कृतात्मा) D6 om ऽय — b) Da शुद्धं (for सता) K1 अनुस्थित — c) V1 स संगृहीतस्; D7 S अस° (for सुस°) Dn2 ते (for तु) V1 [ए]त्वं (for [ए]ष) — d) T1 G2 M4 धर्मपुरोगम ( M4 °मं ) — e) D6 स सेव्य°; T2 M सं( M4 स )सेव° , Cv ससेव्य° (as in text) K4 B5 Da D2 3 5 6 8 शत्रुस्, D4 पुत्रस् (for शत्रूस्) M1. 3 च (for ते) Cv cites पुत्रस — f) K5 M2 Cv गुणान्, Bo वनान्, Da2 गतान् (for गणान्) ❀ Cn गणान् शत्रुसघान् । ❀

14 a) Dn1 तदय; D6 यदयं K1 D4 G2 युध्येत, K2 4 -युध्येत्वा, B1 युध्य त्व, D7 युध्येत, T2 G1 -युध्येतु; M1. 3 रुध्येत्वा, M2 4 -युध्येत्त्वा T1 G3 4 यद्यसप्रति युध्येत — b) Bo 5 स्वधर्म; D7 T G °धर्म (for °कर्म) Bo च, M1. 3 यद् (for तत्) — c) Ś1

C 12. 3943
B 12 106 15
K 12 106 15

जिगीषमाणस्त्वां युद्धे पितृपैतामहे पदे ॥ १४
त्वं चापि प्रतियुध्येथा विजिगीषुव्रते स्थितः ।
अयुद्धैव नियोगान्मे वशे वैदेह ते स्थितः ॥ १५
स त्वं धर्ममवेक्षस्व त्यक्त्वाधर्ममसांप्रतम् ।
न हि कामान्न च द्रोहात्स्वधर्मं हातुमर्हसि ॥ १६
नैव नित्यं जयस्तात नैव नित्यं पराजयः ।
तस्माद्भोजयितव्यश्च भोक्तव्यश्च परो जनः ॥ १७
आत्मन्येव हि संदृश्यावुभौ जयपराजयौ ।
निःशेषकारिणां तात निःशेषकरणाद्भयम् ॥ १८
इत्युक्तः प्रत्युवाचेदं वचनं ब्राह्मणर्षभम् ।
अभिपूज्याभिसत्कृत्य पूजार्हमनुमान्य च ॥ १९
यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्बहुश्रुतः ।
श्रेयस्कामो यथा ब्रूयादुभयोर्यत्क्षमं भवेत् ॥ २०
तथा वचनमुक्तोऽस्मि करिष्यामि च तत्तथा ।
एतद्धि परमं श्रेयो न मेऽत्रास्ति विचारणा ॥ २१
ततः कौसल्यमाहूय वैदेहो वाक्यमब्रवीत् ।
धर्मतो नीतितश्चैव बलेन च जितो मया ॥ २२
सोऽहं त्वया त्वात्मगुणैर्जितः पार्थिवसत्तम ।
आत्मानमनवज्ञाय जितवद्वर्ततां भवान् ॥ २३
नावमन्ये च ते बुद्धिं नावमन्ये च पौरुषम् ।

---

त्वा, D4 स्वां (for त्वां) —d) Dn2 om पदे

15 a) D4 वा (for च) D7 S (except T2 G2) यदि (for प्रति) B1 युध्येथा —b) T2 विजिगीषुर् (for °षु) B1 -व्रतस्थित° — K1 2 om (hapl) 15cd —c) K3 4 D4 अयुद्धेन; B2 °द्धे च; B3 G3 M1 °ध्यैव; Da °ध्वैष, Dn2 °ध्येव, D2 3 5 °ध्वेच, D7 °ध्येत, D8 °द्वैव (for °द्धैव) B1 नियोज्यसे; T2 °गात्मा (for °गान्मे) —d) K3 Dn कुरु हिते; K5 वैदेहि ते, Bo 3 वैदेते (sic) (for वैदेह ते). T1 G3 4 देशे वैदेहके स्थित°

16 a) K3 om. from स त्वं up to जयस् (in 17a). K1 2 4 D4 T1 G3 4 तत्त्वं, B1 सर्वं (for स त्वं) D4 अवेक्ष्यस्व; M2 अपेक्षस्व —b) K5 V1 B Da Dn D2 3 5 6 8 हि(B1 ह)त्वा (for त्यक्त्वा). K5 V1 B D (D1 missing) M लोभम्, T G लोकम् (for [अ]धर्मम्). K1 4 M4 असम्प्रत —c) K5 V1 B D (except D4, D1 missing) S च (for हि). V1 संरब्धात्, B (except B2) D2 3 5 6 8 T2 च क्रोधात् (for च द्रोहात्) —d) M3 स्वधर्मान् T2 हर्तुम् (for हातुम्) K2 Bo Da G1 (before corr) इच्छसि (for अर्हसि).

17 K3 om. up to जयस् (cf. v l 16) —b) T2 नित्य° M3 पुरा जयः. —c) Dn2 D5 तस्माद्धि(D5 °द्धि) जयितव्यश्च, T G1, 3, 4 तस्माज्जयश्च भोक्तव्यो —d) K1 भोक्तव्यं V1 B Da D7 S पराजय° (for परो जन)

18 a) Da आत्मना. All MSS (except Ś1 K1, 4, D1 missing) [अ]पि च (for [ए]व हि) —b) D6 -पराक्रमौ (for °जयौ) —c) Ś1 K1 2 4 G1 कारणात्, T1 G2–4 करणं (for -कारिणा) D7 T1 G2–4 तेषां, T2 चैषा, G1 राजन् (for तात) —d) K3 D4 -कारणाद् D1 भय°.

19 a) K4 इत्युक्त्वा° —c) K3 5 V1 B D (except D4, D1 missing) T G प्रतिपूज्य (Bo 1 °गृह्य) (for अभि°) B1 -शत्रुभ्य° (for -सत्कृत्य)

20 a) B1 तथा D6 महाप्राज्ञ. —b) K1 तथा B1 om ब्रूयाद् K5 D2 3 5 6 8 विचक्षण°, Bo Dn महाश्रुत° (for बहु°) —d) K1 उभयोर्यत्क्षमापनं, K3 5 V1 B D (D1 missing) S °योरेव त(B2 D4 7 T2 G1 M2 4 य)त्क्षमं

21 a) Ś1 K1 G2 3 यथा, K5 Dn1 D3 5 यद्यद्, V1 B Dn2 D2 6 8 यत्तद्, Da यत्त्वद् (for तथा) Dn2 D3 5 6 उक्तोसि —b) Bo lacuna, T G [इ]ह (for च) K3 D4 वचस्तव (for च तत्तथा) — G2 om 21c–22d

22 G2 om 22 (cf v l 21) —a) K3–5 V1 B Da Dn D2 3 5 6 8 कौशल्यम् G3 आहेद (for आहूय) —b) Dn मैथिलो (for वैदेहो) —c) D7 S (G2 om) बुद्धितश् (for नीति°) —d) K3 D7 S (G2 om.) जितं K5 V1 B Da Dn D2 3 5 6 8 लोकश्च विजि(D2 6 °दि)तो मया

23 a) K3 5 V1 B D (except D7, D1 missing) अहं (for सोऽहं) K3 5 V1 Bo 2 4 5 Dn D3 5 7 M2 चा(D7 °ह्या)त्मगुणैर्, B1 स्वत्सदृशैर् —b) D2 3 (before corr) 4–6 -सत्तम° —d) T1 G3 4 वर्तते, G1 °तं (for °तां).

नावमन्ये जयामीति जितवद्वर्ततां भवान् ॥ २४
यथावत्पूजितो राजन्गृहं गन्तासि मे गृहात् ।
ततः संपूज्य तौ विप्रं विश्वस्तौ जग्मतुर्गृहान् ॥ २५
वैदेहस्त्वथ कौसल्यं प्रवेश्य गृहमञ्जसा ।
पाद्यार्घ्यमधुपर्कैस्तं पूजार्हं प्रत्यपूजयत् ॥ २६
ददौ दुहितरं चास्मै रत्नानि विविधानि च ।
एष राज्ञां परो धर्मः सह्यौ जयपराजयौ ॥ २७

इति श्रीमहाभारते शान्तिपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

# १०८

युधिष्ठिर उवाच ।
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
धर्मो वृत्तं च वृत्तिश्च वृत्त्युपायफलानि च ॥ १
राज्ञां वृत्तं च कोशश्च कोशसंजननं महत् ।
अमात्यगुणवृद्धिश्च प्रकृतीनां च वर्धनम् ॥ २
षाड्गुण्यगुणकल्पश्च सेनानीतिस्तथैव च ।

C 12. 3939
B 12. 107 5
K 12 107 6

24 Ś1 om (hapl.) 24 —[a]) K1.5 Bo 3-5 Dn D2.3.5 6 8 [अ]वमन्यामि (for °न्ये च) K3 V1 B1.3 Da D4 हि (for च) Da तां (for ते) B1 वुद्दिद् —[b]) B1 [अ]वमन्य हि, M3 °न्येति (for °न्ये च) —[c]) K4 [अ]वमन्य D7 T G जितमिति (for जयामीति) —[d]) B1 जितस्तु (for जितवद्) T G वर्तेते (for °सा).

25 [a]) B1 यथा वा (for °थावत्) —[b]) D7 T G1.3 4 गृहान् (for गृह) K2 3 मे गृहान्, K6 V1 B Da Dn D2 3 4 6 8 मे गृह; D7 T G2-4 मद्गृहात् —[c]) Ś1 K1 4 सपूजितौ, B1 सगृह्य तौ D4 T2 G1 (before corr) तं (for तौ) K1 विप्रौ —[d]) D7 T G नृप (for गृहान्)

26 [a]) K3 4 B D (except D7, D1 missing) कौशल्य, M राजेंद्र —[b]) G1 प्रगृह्य, M प्रविश्य —[c]) Dn1 D4 6 8 पाद्यार्घं Bo 5 पाद्यार्घ्यं (Bo °र्घ्यं) मधुपर्काद्यैः, Da पाद्यमर्घमधुपर्कैस् —[d]) Ś1 K4 पूज्यार्हं K4 -पूजयेत् D7 T G पूजयामास भूमिपं

27 [c]) K4 राज्या (for राज्ञा) —[d]) K6 V1 B Da D2 3 5 6 सह्यो, Dn1 सत्य; Dn2 D8 नित्यौ, D7 S समौ (M4 °मे) (for सह्यौ) M4 -पराजये

Colophon D1 missing —*Sub-parvan* Ś1 K V1 B Da2 Dn D2 3 5-7 S राजधर्म —*Adhy name* Ś1 V1 B Da Dn1 D2-6 काल(B2 om ल)कवृक्षीय, M2-4 दुहितृप्रदान —*Adhy no* (figures, words or both) K5 109, B1 96, B4 Dn1 105, Da1 107 (as in text), Dn2 106, D7 S 108. —*Śloka no* Dn D8 28

## 108

☞ D1 is missing for 1[a]-5[a] (cf v l 12 79 28).

1 D8 om. the ref 1[ab] = 6 40 41[ab] —[a]) G1 ब्रह्मण॰ (for ब्राह्मण) D8 वैश्यो (for विशां) —[b]) M नराधिप (for परंतप) —[c]) K1 T1 धर्मा वृत्त, K3-5 V1 Bo 3-5 Da2 Dn D2 3 5-8 T2 G1-3 धर्मवृत्त (D8 °त्तिं), G4 धर्मवृत्तश् (for धर्मो वृत्त) G3 om. च Da वृत्तिं, Dn1 वित्त, Dn2 D3 वृत्त (for वृत्तिश्) —[d]) K3 5 Dn1 D7 T G M1.3 4 वृत्त्यु(G1 मत्स्यु)पाया, B2 °पाय, D4 °पाय॰ (for °पाय)

2 D1 missing (cf v l 1) D6 om 2[ab] —[a]) K2 4 राज्ञो K5 V1 B2 Da T1 G M2 वृत्तिश्, Bomb ed वित्त (for वृत्त) K3 4 D4 वृत्तिश्, V1 Bo 2 3 5 कोपश्; B4 D2 3 5 कोप, Da Dn D8 M2 कोश (for कोशश्) —[b]) V1 B Da D2 3 5 कोप, D4 कोश॰ (for कोश) K4 सजयन; D4 -प्रजननं, D7 -सचयन, T2 सजनस (for °नन) K5 D8 च यत्, V1 B Da Dn D2-5 T1 G M जय॰, D7 T2 च य॰ (for महत्) —[c]) K2 3 5 V1 B D (except D4, D1 missing) T G1 4 वृत्तिश् (for -वृद्धिश्) —[d]) D7 M1.3 वर्जन (for वर्धनम्)

C 12 3959
B 12 107 3
K 12 107 3

दुष्टस्य च परिज्ञानमदुष्टस्य च लक्षणम् ॥ ३
समहीनाधिकानां च यथावल्लक्षणोच्चयः ।
मध्यमस्य च तुष्ट्यर्थं यथा स्थेयं विवर्धता ॥ ४
क्षीणसंग्रहवृत्तिश्च यथावत्संप्रकीर्तिता ।
लघुनादेशरूपेण ग्रन्थयोगेन भारत ॥ ५
विजिगीषोस्तथा वृत्तमुक्तं चैव तथैव ते ।
गणानां वृत्तिमिच्छामि श्रोतुं मतिमतां वर ॥ ६
यथा गणाः प्रवर्धन्ते न भिद्यन्ते च भारत ।
अरीन्हि विजिगीषन्ते सुहृदः प्राप्नुवन्ति च ॥ ७
भेदमूलो विनाशो हि गणानामुपलभ्यते ।
मन्त्रसंवरणं दुःखं बहूनामिति मे मतिः ॥ ८
एतदिच्छाम्यहं श्रोतुं निखिलेन परंतप ।
यथा च ते न भिद्येरंस्तच्च मे ब्रूहि पार्थिव ॥ ९

भीष्म उवाच ।

गणानां च कुलानां च राज्ञां च भरतर्षभ ।
वैरसंदीपनावेतौ लोभामर्षौ जनाधिप ॥ १०
लोभमेको हि वृणुते ततोऽमर्षमनन्तरम् ।
तौ क्षयव्ययसंयुक्तावन्योन्यजनिताश्रयौ ॥ ११
चारमन्त्रबलादानैः सामदानविभेदनैः ।
क्षयव्ययभयोपायैः कर्शयन्तीतरेतरम् ॥ १२

---

3 D1 missing (of v 1 1). —ᵃ) Ś1 षाड्गुण्य, K4 षड्गुण्यं (for षाड्गुण्य) K1 2 4 गण (for गुण) D6 वृत्तिश् (for -कल्पश्) —ᵇ) K6 V1 B Da Dn D2 3 5 6 8 -वृत्तिस् (for -नीतिस्) —ᶜ) Dn D7 परिज्ञान च (D7 °नम) दुष्टस्य —ᵈ) Dn लक्षण च संतामपि; D7 दुष्टस्यैव च लक्षण.

4 D1 missing (of v 1 1) —ᵃ) M4 समधीना° (for समहीना°) —ᵇ) K1 लक्षणैश्चय, K4 6 V1 B Da Dn D2 3 5 6 8 लक्षण च यत् (K4 य°) (for °णोच्चय) —ᶜ) Ś1 K (except K6) D4 आश्रमस्य (for मध्यमस्य). —ᵈ) G1 2 यथार्थेय (for यथा स्थेय) D5 विधेयतां, D6 च वर्धता, G1 2 M2 विवर्धिता

5 D1 missing for 5ᵃ (of v 1 1) —ᵃ) K6 V1 B Da Dn D2 3 5 6 8 -ग्रहण (for -संग्रह) B1 om च. D4 क्षीनाधिकाना च ** —ᵇ) D7 S परि (for संप्र) K6 V1 B Da Dn D2 3 5 6 8 यथाधर्मे प्रकीर्तिता (K5 Dn °त; B3 °ता) —ᵈ) B1 T2 G2 ग्रह-, G1 गृह (for ग्रन्थ) D4 यामेन (for -योगेन).

6 ᵃ) K1 विजिगेषुस् —ᵇ) Da युक्तं (for उक्त) D3 5 चैव (for चैव) K1 B3 तथैव च (B3 तै°), K3 D4 7 T G विशेषत, Dn2 lacuna, M समासत —ᶜ) K1–3 B3–5 D3 3 5 M1 3 4 वृत्तम् (for वृत्तिम्).

7 ᵃ) K2 4 B1 2 Da D7 T G1 3 4 प्रवर्तते, D1 °र्तते; D4 °र्धंति. —ᵇ) D1 भिद्यते. D7 चतुरंगस्य भारत —ᶜ) K4 अरीर्हि, K6 V1 B D2 6 8 परांश्च, Da Dn D3–5, 7 S अरींश्च, D1 corrupt (for अरीन्हि) D7 S विजिगीषति (for °षन्ते) —ᵈ) K4 सुहृदा Dn2 चाप्नुवति B6 हि, D1 lacuna (for च)

8 ᵃ) D4 भेदमूले B6 [ऽ]पि (for हि). —ᵇ) K6 V1 B2 Da Dn D2 उपलक्षये, B6 4 D3 5 6 8 °लक्ष्यते, B1, 3 5 °लक्षते (for °लभ्यते) —ᶜ) K4 मेत्र (for मन्त्र).

9 ᵇ) B6 नित्यमेव (for निखिलेन) —ᶜ) B2 मे (for ते) D7 T1 G1 M1–3 भिद्येयुस्, M4 भिद्यते (for भिद्येरंस्). —ᵈ) K4 6 V1 B Da Dn D2 3 5 6 8 वद (for ब्रूहि) T G M1 3 भारत (for पार्थिव) K1 D7 तन्मे ब्रूहि पितामह

10 D3 om. the ref —ᵇ) D1 राज्ञं, D4 राजां, D5 राज्ञा. K6 V1 B Da Dn D2 3 5 6 8 राज्ञा भ(B1 भा)रतसत्तम —ᶜ) Ca -सदीपकौ (for °नाव्) —ᵈ) Ś1 K1 2 4 D1 लोभमोहौ, B1 लोभहर्षौ (for लोभामर्षौ) K3 Dn D7 T2 G1 (also) M नराधिप, T1 G तथैव च (for जनाधिप)

11 ᵃ) D4 लाभम् D2 6 G1 एके K1 D4 7 S विवृ(D4 °श्रु)णुते, D3 हि वृणते —ᵇ) M4 ततो वर्षम् D7 S अनतर (T2 G1 °रा). — K1 D1 om (hapl) 11ᶜ–12ᵈ —ᶜ) K2 व्ययक्षय-, K3 जयव्यय (for क्षय°) D7 T2 G1 ततो ह्य(T2 °तोस्या)क्षय(D7 °म)सयुक्ताव्; T1 G2–4 ततो ह्यमर्षस° —ᵈ) K3 D4, 7 S जनि(G2 °थि)ताशयौ (for °श्रयौ) K6 V1 B Da Dn D2, 3 5, 6 8 अन्योन्यं च (B1 चा) विनाशिनौ.

12 K1 D1 om 12 (of v 1 11) —ᵃ) K3 चरे (sic) (for चार) D7 बलाधारैः, S (except T2)

तत्र दानेन भिद्यन्ते गणाः संघातवृत्तयः ।
भिन्ना विमनसः सर्वे गच्छन्त्यरिवशं भयात् ॥ १३
भेदाद्गणा विनश्यन्ति भिन्नाः सूपजपाः परैः ।
तस्मात्संघातयोगेषु प्रयतेरन्गणाः सदा ॥ १४
अर्था ह्येवाधिगम्यन्ते संघातबलपौरुषात् ।
बाह्याश्च मैत्रीं कुर्वन्ति तेषु संघातवृत्तिषु ॥ १५
ज्ञानवृद्धान्प्रशंसन्तः शुश्रूषन्तः परस्परम् ।
विनिवृत्ताभिसंधानाः सुखमेधन्ति सर्वशः ॥ १६
धर्मिष्ठान्व्यवहारांश्च स्थापयन्तश्च शास्त्रतः ।
यथावत्संप्रवर्तन्तो विवर्धन्ते गणोत्तमाः ॥ १७
पुत्रान्भ्रातॄन्निगृह्णन्तो विनये च सदा रताः ।
विनीतांश्च प्रगृह्णन्तो विवर्धन्ते गणोत्तमाः ॥ १८
चारमन्त्रविधानेषु कोशसंनिचयेषु च ।
नित्ययुक्ता महाबाहो वर्धन्ते सर्वतो गणाः ॥ १९

C 12 3975
B 12 107 19
K 12 107 19

---

°धाने (for °दाने) — $^{b}$) K5 दाम, B1 Da -दड; D3 6 -मत्र (for -दान) — $^{d}$) Ś1 K2 4 V1 B Da Dn D2-5 8 कर्षयति, K5 D5 प्रकर्षति Bo [इ]तरे पर

13 $^{a}$) Dn तत्राद्दानेन, D7 दाने तु दानेन — $^{b}$) D4 गुणा B1 सहात (for सघात) — $^{c}$) K6 विमा नम°, D1 विमनमा — $^{d}$) K4 [अ]रिवस

14 $^{a}$) K3 D7 G2-4 M2 भेदाद्गुणा, V1 Bo 1 5 भेदाकुला, Dn भेदे गगा, D3 भेदाद्रण (sic) (for °द्गणा) Dn विनश्युहिं, G2 विपश्यति (for विन°) — $^{b}$) K1.4 B2 Da D2.7 T G2-4 सूपजया (K1 °य), K2 Dn तु सुजया, K3 D2 सूयजया, K6 सुखजया, B1 सगजवा, D4 सपजयं, D6 तु (D6 स्व) पजया, D3 सूयजना (for सूपजपा) — $^{c}$) B1 सहात (for सघात) K5 V1 B D (except D1.7) -योगेन (for -योगेषु) — $^{d}$) K1 प्रयावर; D1 प्रयतोर, D4 प्रयतरद् (for °तेरन्) D7 गुणा D2 5.6 यदा, D7 T1 G3 4 सदा, T2 G1.2 तथा (for सदा)

15 $^{a}$) K1 एव, K2 5 V1 B Da Dn D2-5 8 चैव, D1 ह्येव (for ह्येव) K5 Dn2 D3 6 8 T2 G2 M [अ]भि- (for [अ]धि) — $^{b}$) B1 सहात, D1 सजात K2.5 Dn D1.6 पौरुषं, B1 D2 3 4 -पौरुषा, T2 G1 °षान् (for °षात्) — $^{c}$) B1 बाह्याश्च; D1 बाह्याच; T1 G3 4 बाह्यां च, M1 बाह्यश्च D1.4 5 मैत्री, M वृत्तिं D1 7 कुर्वते

16 $^{a}$) M1.2 प्रशसति K3 5 V1 B D (except D1.4.7) M2 ज्ञानवृद्धा प्रशसति — $^{b}$) D2 6 शुश्रूषत; M1.2 शुश्रुषंत — $^{c}$) V1 D7 S विनिवृत्ताति- (V1 °त्ता वि, D7 °त्तानि, G1 °त्ता च), D8 न निवृत्तामि (for विनि°) K5 -संधाता (for -सधाना) ※ Cv: विनिवृत्तानुसधाना इत्यत्र विशेषेण निवृत्तो नितरां वर्तितं अभि(sic)मधानं समुदायो येषां ते । अनुसधाना इति पाठे अन्योन्यमनुसधानं सधिर्येषा ते तयोक्ता । ※ — $^{d}$) D1 एधति, D8 एधति G1 संशय (for सर्वश) D3 सुमेधति च सर्वश

17 M1 8 read 17 after 20$^{ab}$ — $^{a}$) D7 T1 G2-4 धर्मिष्ठा K1 व्यवहारंश्; T2 G1 सत्यचाराद्, G2-4 व्यवहाराद् — $^{b}$) M स्थापयति स्म (for °यन्तश्च) K1 मशास्त्रत; V1 परस्पर; Bo 4 (m as in text) 5 च सर्वश (for च शास्त्रत) D7 T G स्थापयति च शाश्वतान्. — $^{c}$) Ś1 K1 संप्रवर्धंतो (K1 °ते); K5 6 V1 B Da D2-3 T G M2 4 °पश्यतो (G2 °ते); Dn प्रवि पश्यतो; M1 8 सप्रशस्यतो (for °वर्तन्तो) — $^{d}$) D1 विवर्धतो Bo गणोत्तरा°, D7 T1 G2-4 M2 गुणोत्तमा (for गणो°)

18 B1 om 18-19 D1 repeats 18-19 after 19 — $^{a}$) G1 पुत्र- (for पुत्रान्) G3 भृत्यान् (for भ्रातॄन्) V1 reads from गृह्णन्तो up to भ्र प्र on marg K1 B1 Dn D2-7 T1 G2-4 विगृह्णतो, K3 निगृह्णंतो, M2 4 नियच्छंतो M1.8 स(M8 नि)गृह्णतो नियच्छतो. — D5 G2 om (hapl.) 18$^{bc}$ — $^{b}$) K1 विनयो (for °ये) K1 8 B2 T1 G1 M2 4 रता सदा (by transp), K3 मूदा रता, Bo Da D4 7 रत (Bo रतान्) सदा K1 B3-5 Dn D2 8 6 8 विनयतश्च तान्सदा, V1 विनयेन च तान्सदा; T2 G1 सदा वै धर्म दूषकान्, G3 विनये च निरता सदा, M1.8 विवर्धंते गणोत्तमा° (=18$^{d}$) — $^{c}$) Ś1 D2 8 G1 विनीताश्च, D1 विततांश् T2 G1 चानु (for च प्र) V1 निगृह्णंतो; Da प्रगृह्णंति T1 G3 4 विनीताना च गृह्णतो — $^{d}$) Bo विवर्धंतो D5 गणोत्तम; D7 T G M2 गुणोत्तमा°

19 B1 D3 om. 19 (for B1, cf v 1 18) For the repetition in D1, cf. v 1 18 V1 reads 19 on marg — $^{a}$) V1 -विधानेन (for -विधानेषु) T2 विधानेषु च मंत्रेषु — $^{b}$) V1 Bo 2 4.5 Da D8 5 6 कोष, B3 लोक-, T G2-4 मंत्र-, G1 मन्त्र (for कोश-) K1.2 4 D1 (both times) -सचिचयेषु, V1 Bo 2 4.5 -संचयनेषु (for -सनिचयेषु) — $^{c}$) M2 नित्ययुक्तो K1 V1 B (B1 om.) Da D2 8 5 6 महात्मानो (for °बाहो) — $^{d}$) K5 V1 B (B1 om) Da D2 3 5 6 वर्धते च गणोत्तमा;

C. 12 3979
B. 12 107 20
K. 12 107 50

प्राज्ञाञ्शूरान्महेष्वासान्कर्मसु स्थिरपौरुषान् ।
मानयन्तः सदा युक्ता विवर्धन्ते गणा नृप ॥ २०
द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः ।
कृच्छ्रास्वापत्सु संमूढान्गणानुत्तारयन्ति ते ॥ २१
क्रोधो भेदो भयो दण्डः कर्शनं निग्रहो वधः ।
नयन्त्यरिवशं सद्यो गणान्भरतसत्तम ॥ २२
तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः ।
लोकयात्रा समायत्ता भूयसी तेषु पार्थिव ॥ २३
मन्त्रगुप्तिः प्रधानेषु चारश्चामित्रकर्शन ।
न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत ॥ २४
गणमुख्यैस्तु संभूय कार्यं गणहितं मिथः ।
पृथग्गणस्य भिन्नस्य विमतस्य ततोऽन्यथा ।
अर्थाः प्रत्यवसीदन्ति तथानर्था भवन्ति च ॥ २५
तेषामन्योन्यभिन्नानां स्वशक्तिमनुतिष्ठताम् ।
निग्रहः पण्डितैः कार्यः क्षिप्रमेव प्रधानतः ॥ २६
कुलेषु कलहा जाताः कुलवृद्धैरुपेक्षिताः ।
गोत्रस्य राजन्कुर्वन्ति गणसंभेदकारिकाम् ॥ २७
आभ्यन्तरं भयं रक्ष्यं सुरक्ष्यं बाह्यतो भयम् ।

---

D7 S गणा व( D7 गुणा व , M2 गणान्व )र्धंति सत्तमा ( M °म ).

20 a ) V1 B1 प्रज्ञाञ्शूरान्, D7 T1 G2-4 राज्ञां चारान् All MSS ( except Ś1 K1-4 D1. 4 ) महोत्साहान् ( for महेष्वासान् ). — b ) Ś1 K1. 2 D1 स्थित ( for स्थिर- ) — After 20ab, M1. 8 read 17. — c ) D1 मानयता.. After मानयन्त., D5 reads for the first time from ते ( in 21d ) up to मान ( in 23a ), repeating it in its proper place M1. 8 तथा ( for सदा ); D4 T2 G1 M1-8 युक्तान् ( for युक्ता ) — d ) K8 गणा इव, M4 गणोत्तमा

21 For the repetition in D5, cf. v 1 20. — a ) D4 द्रव्यावतेश् ( sic ) T2 G1 शूराश् ( for शूराश् ) — b ) K1. 2 4 V1 B Da D1-8 5-8 S शास्त्रज्ञा', K8 D4 मंत्रज्ञा ( for शस्त्रज्ञा' ) — c ) K4 D1 कृच्छ्रापत्सु च ( for °स्वापत्सु ). K1 D8 [अ]संमूढान्, K8 V1 B ( except B8 ) Da D8 5 6 G8 संमूढा — d ) Bo 5 गणा K8 5 V1 B1-4 Da Dn D2 8 5 6 8 T2 G1 गणा मुत्ता( K8 B1 Dn °णा' संता )रयंति ते

22 For the repetition in D5, of v 1. 20 — a ) D4 क्रोधभेदौ, D7 T G क्रोधो लोभो K8. 5 V1 B D ( except D6 ) S भय ( D1 °ये ); Cb भयो ( as in text ) ❀ Ca भय इति पुल्लिंगमार्षम् । ❀ Da2 D4 दड — b ) Ś1 K1 2 4 5 B D ( except D4 7 ) कर्षण K4 D4 निग्रहे, D6 M विग्रहो ( for नि° ) V1 कर्म णानुग्रहो वधः — c ) K8-5 V1 B8 Dn D2 5 6 8 T2 G2 M2 नयति. G1 सामो ( for सद्यो ). — d ) M1 8 गणा B1 om. from तसत्तम up to पार्थिव ( in 23d )

23 B1 om 23 ( of v 1. 22 ) For the repetition in D5, of v 1 20 — a ) T2 मानयितव्यास ( for मान° ). — b ) D4 गुण ( for गण- ). D1 प्रभावत. ( for प्रधानत° ) D7 गणयित्वा प्रयत्नतः. — c ) T2 लोके यंत्र ( for लोकयात्रा ) B2 समापन्ना; D2 °यंता; M4 °युक्ता ( for °यत्ता ). — d ) D2 भूयसे. K8 D4 7 S भारत, D8 पार्थिव°.

24 a ) V1 B1. 8 Da1 D4 7 T2 G1 M1. 8 मंत्रगुप्ति-; B4 D2 8 6 °गुप्त° ( for °गुप्ति° ) — b ) D7 चराश्; T1 G8 4 चाराश्; T2 दाराश् ( for चारश् ) Ś1 K1. 2 4 B1 D1 -कर्षणं; K5 V1 B2 5 Dn D2 8 5 -कर्षण; B4 कर्षण°, Da -कर्शन°, D6 कर्मणा; D8 कर्पन; G1 4 कर्शना ( for °न ). — c ) Ś1 K2 4 गणना°; K1 गणा ना ; D1 न गना ; D4 7 T G M2 न गण° ( D4 °ण ); M2 न गुण° ( for न गणा° ) K1 कृच्छ्रशो; D4 कात्स्न्यशो — d ) K2. 8 Bo 4. 5 D2 5-7 S अर्हति ( D2 °सि ). K1 B2 पार्थिव ( for भारत ).

25 a ) B1 स्वं, Da D4 च ( for तु ) G2 संबुध्य ( for संभूय ) — b ) B1 कार्ये — c ) K4 -गुणस्य ( for -गणस्य ) — d ) K8 विगतस्य; K4 वितपस्य, K5 V1 B Da Dn D2 8. 5 6 8 वितत( V1 °थ )स्य; M4 विनतस्य ( for विम° ) K4 तयोन्यया. — e ) D4 अर्थात्, M4 अर्थान् ( for अर्था ) K4 प्रत्सवसीदंति. — f ) D4 ततो ( for तथा ). Bo 4 5 हि; Da ते ( for च )

26 b ) K1 स्वशक्तीन्. G1 अनुतिष्ठता — c ) D1 4 पंडिते — d ) B1 एप ( for एव ) D4 क्षिप्रमेवं विधानत .

27 a ) D1 कुले तु ( for कुलेषु ) T1 G1 कुलहा ( for क° ). — b ) B1 कुलविज्ञैर् ( for °वृद्धैर् ) — c ) K8 B8 Dn D7 S नाशं ( for राजन् ) D4 कुर्वंति. — d ) K2 4 D1 गणा° ( for गण ). K8 -कारितं; K4 -वारिकां; V1 B2 कारणं; B1 Da कारकं; D7 S का-

अभ्यन्तराद्भयं जातं सद्यो मूलं निकृन्तति ॥ २८
अकस्मात्क्रोधलोभाद्वा मोहाद्वापि स्वभावजात् ।
अन्योन्यं नाभिभाषन्ते तत्पराभवलक्षणम् ॥ २९
जात्या च सदृशाः सर्वे कुलेन सदृशास्तथा ।
न तु शौर्येण बुद्ध्या वा रूपद्रव्येण वा पुनः ॥ ३०
भेदाच्चैव प्रमादाच्च नाम्यन्ते रिपुभिर्गणाः ।
तस्मात्संघातमेवाहुर्गणानां शरणं महत् ॥ ३१

इति श्रीमहाभारते शान्तिपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

# १०९

युधिष्ठिर उवाच ।
महानयं धर्मपथो बहुशाखश्च भारत ।
किं स्विदेवेह धर्माणामनुष्ठेयतमं मतम् ॥ १
किं कार्यं सर्वधर्माणां गरीयो भवतो मतम् ।
यथायं पुरुषो धर्ममिह च प्रेत्य चाप्नुयात् ॥ २
भीष्म उवाच ।
मातापित्रोर्गुरूणां च पूजा बहुमता मम ।
अत्र युक्तो नरो लोकान्यशश्च महदश्नुते ॥ ३

C 12 3991
B 12. 108 3
K 12. 108. 3

---

रका (for कारिकाम्) K4 Bo 2–4 Dn D2, 3 4 6, 8 गणभेदस्य कारण (Dn1 °कं)

28 D4 om. (hapl) 28ab — a) K1 B1 2 D5 7 T1 G1, 2, 4 अभ्य(K1 °त्य)तर, V1 Bo 2 Da Dn D3 आ (V1 Bo D2 अ)भ्यंतर (for आभ्यन्तरं) K2 3 रक्ष्य, B3 रक्ष — b) K4 Dn असार; Bo प्ररक्ष्य, B4 स्वरक्ष्य, B2 सुरक्ष; M भरक्ष्य (for सु°) — c) K2 2 B2 3 Da Dn D2 3 आभ्यतर (Da °र); V1 Bo–2 4 D2 6 8 अभ्यतर (B1 D2 °र) (for °तराद्) K2 4 V1 B Da Dn D2 3 4 6 8 राजन् (for जात) — d) D.–6 मूलान् (for मूल) K2–4 V1 B Da Dn D7 8 S (except T2 G1) सद्यो (K4 मद्यो; B1 मद्यो) मूलानि कृतति

29 a) K3 Dn मोहाभ्यां (for लोभाद्वा) K4 D2 3 5–7 S अकस्माल्लोभमोहाद्वा — b) K2 3 Dn लो भाद्वापि; K. V1 Bo–2 4 5 Da D2 3 5 6 8 चापलाद्वा; B3 D1 lacuna; D7 S क्रोधाद्वापि (for मोहा°) D1 corrupt, M4 स्वभावजान — c) B1 Da नाभ्यभाषंत (B1 °ते)

30 c) V1 B2 D4 न च शौर्येण, Da नवशौं°; Dn न चोद्योगेन, D2 न तु शौर्येण (for न तु शौं°) G1 युक्त्या (sic) — d) D1 द्रव्यरूपेण D7 T G समा° (for पुन°) M सत्व(M2 °त्वा)द्रव्यागमेन वा

31 a) K1 भेदाश्चैव, K4 तदाश्चैव K1, 4 प्रमादाश्च, K3 5 V1 B Da Dn D2 3 5–8 T G प्रदा(Da T2 G1 °धा)नाच्च; D1 प्रसादाच्च (for प्रमा°) — b) K1, 2 4 B2 नाप्यते; K3 5 Da Dn D4 G2 भिद्यंते; V1 Bo, 3 D1 नास्यते (D1 °तो); B1 D2 6 8 नास्यंते, B4 नस्यंते, G1 नास्यते (for नाम्यन्ते) K5 B (except B2) D2 3, 5 6 8 बलात् (for गणा°) — c) B4 सहायम्; Da संजा°, D7 सततम् — d) D2 3 5 6 नान्येषां (for गणानां)

Colophon — *Sub-parvan* Ś1 K1, 2 4 6 V1 B Da Dn1 D1–7 T2 G1 3 4 M राजधर्म — *Adhy name* Ś1 K V1 Bo 1 3–5 D1–3 5 6 गणवृत्त, B2 M1–3 गणवृत्ति°, Da विजिगीषमाणवृत्त, D4 गणाना वृत्त — *Adhy no* (figures, words or both) K5 110, B1 97, B3 4 Dn1 106, Da1 108 (as in text), Da2 Dn2 107, D3 8 104, D7 S 109 — *Śloka no* Dn1 31, Dn2 32

## 109

1 D8 G1 om the ref — a) G1 धर्मपदो — b) D3 T1 G3 -शाखाद्य Da पार्थिव (for भारत) —D1 om (hapl.) 1cd — c) D4 किंचिदेव ह, G3 कथ स्विदेव G2 हि (for [इ]ह) Da1 om from धर्माणा up to ध (in 2a) D4 कर्माणाम् (for ध°) — D6 om (hapl) 1d–2a

2 Da1 om up to ध, D6 om 2a (of v l 1) — a) B1 मंत्र (for सर्व) K3 T G1 M कार्याणां; B3 -कर्माणां, D4 -कार्येषु, D7 G2–4 -भूतानां (for -धर्माणा) — b) G1 भवतो गरियो मत (sic) — c) D1 धर्म- K4 5 V1 B Da Dn D3 5 6 8 T1 यथाह (T1 °य) परमं

C 12 3992
B 12 108 4
K 12 108 4

यदेते ह्यभिजानीयुः कर्म तात सुपूजिताः ।
धर्म्यं धर्मविरुद्धं वा तत्कर्तव्यं युधिष्ठिर ॥ ४
न तैरनभ्यनुज्ञातो धर्ममन्यं प्रकल्पयेत् ।
यमेतेऽभ्यनुजानीयुः स धर्म इति निश्चयः ॥ ५
एत एव त्रयो लोका एत एवाश्रमास्त्रयः ।
एत एव त्रयो वेदा एत एव त्रयोऽग्नयः ॥ ६
पिता ह्यग्निर्गार्हपत्यो माताग्निर्दक्षिणः स्मृतः ।
गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ ७
त्रिष्वप्रमाद्यन्नेतेषु त्रीँल्लोकानवजेष्यसि ।
पितृवृत्त्या त्विमं लोकं मातृवृत्त्या तथापरम् ।
ब्रह्मलोकं गुरोर्वृत्त्या नित्यमेव चरिष्यसि ॥ ८
सम्यगेतेषु वर्तस्व त्रिषु लोकेषु भारत ।
यशः प्राप्स्यसि भद्रं ते धर्मं च सुमहाफलम् ॥ ९
नैतानतिशयेज्जातु नात्यश्नीयान्न दूषयेत् ।
नित्यं परिचरेच्चैव तद्वै सुकृतमुत्तमम् ।
कीर्तिं पुण्यं यशो लोकान्प्राप्स्यसे च जनाधिप ॥ १०

---

( V1 °मो ) धर्मम्　— $^d$ ) D1 -सिद्धं ( for इह ). K4 5 V1 B Da Dn D3 5 6 8 चा( Da वा )मुर्या, D4 चामु यात्, D7 T1 G2-4 चा( T1 वा )श्नुयात् ( for चामु° )

3 D8 om the ref　— $^a$ ) D1 पितापुत्रोर्　— $^b$ ) D1 प्रजा ( for पूजा )　D6 मत ( sic ) ( for मम )　— $^c$ ) B8 Dn इह युक्तो; D7 T1 G2-4 अत्र वर्तन्; T2 G1 M अनुवर्तन् ( M2 °र्त्य ) ( for अत्र युक्तो )　D6 नरा, M4 नदो　K8 D4 धर्मं ( for लोकान् ).

4 $^a$ ) K5 B0 8-5 Dn D2 8 5 6. 8 यच्च ते; V1 यथैते; B1 यं च ते ( for यदेते ). K1. 8 V1 B0 1 8-5 Dn D2-6 8 G1 M [ऽ]भ्य( K1 °त्य )नुजानीयु°; K5 [ऽ]भ्यव°; B2 Da संप्र° ( for ह्यभि° ). — D7 G4 om ( hapl ) $4^b$-$5^c$; T2 G2 om $4^b$-$5^d$　— $^b$ ) D4 प्र ( for सु )　— $^c$ ) K1. 5 D2 8 6 8 T1 G1 8 M1 8 4 धर्मं धर्मं; K4 B1 Dn2 D4 5 M2 धर्माधर्मं ( Dn2 °र्मे ) ( for धर्म्यं धर्मं ). B2 धर्माविरुद्ध　Dn2 विरोद्धं, D8 विरुद्धां.　— $^d$ ) D4 तत्र ( hypermetric ) ( for तत् )

5 $5^{ab}$ = ( var. ) Manu. 2 $229^{cd}$. D7 G4 om $5^{abc}$, T2 G2 om 5 ( of v. l. 4 )　— $^a$ ) G1 एतैर् ( for न तैर् )　K1 अनुत्वनु , B8 D2 8 6 8 अभ्यनु- ( for अनभ्यनु )　Dn D4 5 न च तैरभ्यनुज्ञातो.　— $^b$ ) K5 V1 B Da Dn D2 8 5 6 8 M समाचरेत् ( for प्रकल्पयेत् )　— $^c$ ) K5 V1 B Da Dn D2 8 5 6 8 य च ते ( for यमेते )　D8 [ऽ]भ्यनुज्ञानीयु°, G1 ह्यनुजा°

6 = ( var. ) Manu 2 230. Da om ( hapl ) 6 Ś1 K1-4 D1 om ( hapl ) $6^{ab}$, V1 reads $6^{ab}$ on marg　— $^a$ ) B1 G1 देवा, D7 T1 G2-4 M वेदा ( for लोका ).　— $^b$ ) B0 1 8-5 D8 त्रयोश्रमा ( by transp ); D7 G2 [आ]श्रमादय°　— B1 om ( hapl. ) $6^{cd}$.　— $^c$ ) K1. 4 एतदेव; D1 एते ह्येव; D8 अत एव　B2 T2 देवा, D7 T1 G M लोका ( for वेदा )　— $^d$ ) K4 एतदेव; D1 एते ह्येव

7 = ( var. ) Manu 2 231; Viṣṇudharmasūtra 31. 7　— $^a$ ) G1 [अ]पि ( for हि )　K5 V1 B Da Dn D2 8 5 6. 8 पिता वै गार्हपत्योग्निर्.　— $^b$ ) Dn2 D2 G1 दक्षिणा, D6 दक्षिण　T2 G1 M2 स्मृता　— $^c$ ) K8 B1 D4 च; D7 S [ऽ]ग्नि° ( for तु )　— $^d$ ) D1 साग्निनेत्रा, D4 corrupt, G1 साग्नित्रेधा, M1 8 साग्निस्त्रेता.

8 = ( var ) Manu 2 $232^{ab}$, 233　— $^a$ ) K1 [अ]प्रमाद्य, K5 B1 2 Da प्रमाद्यन् ( B1 °द्य ), D1 [अ]प्रसाद्यन्; D3 [अ]त्र माद्यन्, T2 [अ]प्रमत्तस् ( for °माद्यन् )　K1 चैतेषु; B1 ह्येतेषु, D2 3 6 नैतेषु; D7 T G3 4 ए( T2 ते )षु स्व ( for एतेषु ). D5 त्रिष्वप्रमाद्यते तेषु　— $^b$ ) D7 T1 G2-4 M2 त्रि ( for त्रीँल् )　K5 V1 B ( except B2 ) Dn D2 8 5 6 8 च वि, Da चाव, D7 T G M4 अपि ( for अव )　M2 -जेष्यति; M4 ज्येष्यति　— $^c$ ) D4 पित्र.　K2 D1 -भक्त्या ( for -वृत्त्या )　B1 पितृहुतादिमं लोकं　— $^d$ ) B1 मातृहुता; D1 °भक्त्या ( for °वृत्त्या ).　— $^e$ ) D1 4 ब्रह्मलोक.　D1 भक्त्या ( for वृत्त्या )　— $^f$ ) K8 D7 T1 G8 4 तरिष्यसि ( for चरि° )　K4 5 V1 B0 2-5 Da Dn D2-6 8 M2 नियमेन तरि( V1 Da भवि , B0 M2 चरि )ष्यसि, B1 इमे चेन्न भविष्यसि

9 Dn2 om. $9^{ab}$.　— $^a$ ) B2 Da वर्तेस्त्वं ( for वर्तस्व )　— $^c$ ) Da2 प्राप्स्यति　— $^d$ ) B2 Da Dn T2 G1 सुमहत् ( for सुमहा ).　D1 धर्मं च स महाबल

10 $^a$ ) B1 वैतान् ( for नैतान् )　Ś1 K4 D1 अतिक्रमेज्; K1 अभिजह्यै ( sic ), D2 3 6 अनुशयेज् ( for अति° ) D7 T G नैतानतिशयी( G2 °ये )थास्त्व.　— $^b$ ) B1. 8 4 भूषयेत्; Da सेवयेत्; M1 दूषये　D7 T1 G2-4 नात्य

सर्वे तस्यादृता लोका यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ ११
नैवायं न परो लोकस्तस्य चैव परंतप ।
अमानिता नित्यमेव यस्यैते गुरवस्त्रयः ॥ १२
न चास्मिन्न परे लोके यशस्तस्य प्रकाशते ।
न चान्यदपि कल्याणं पारत्रं समुदाहृतम् ॥ १३
तेभ्य एव तु तत्सर्वं कृत्यया विसृजाम्यहम् ।
तदासीन्मे शतगुणं सहस्रगुणमेव च ।
तस्मान्मे संप्रकाशन्ते त्रयो लोका युधिष्ठिर ॥ १४

दशैव तु सदाचार्यः श्रोत्रियानतिरिच्यते ।
दशाचार्यानुपाध्याय उपाध्यायान्पिता दश ॥ १५
पितॄन्दश तु मातैका सर्वां वा पृथिवीमपि ।
गुरुत्वेनाभिभवति नास्ति मातृसमो गुरुः ।
गुरुर्गरीयान्पितृतो मातृतश्चेति मे मतिः ॥ १६
उभौ हि मातापितरौ जन्मनि व्युपयुज्यतः ।
शरीरमेतौ सृजतः पिता माता च भारत ।
आचार्यशिष्टा या जातिः सा दिव्या साजरामरा ॥ १७
अवध्या हि सदा माता पिता चाप्यपकारिणौ । C 12 4008 B 12 109 20 K 12 108 20

---

श्रोया (M4 °या) न दूषये, T2 G1 नावमन्येनं (G1 °न्ये न°) दूषये (G1 °ये) — $^{c}$) K1 T1 G1 3 M1 3 4 परि चरेत् D4 चापि (for चैव) — $^{d}$) K2 तत्ते (for वर्द्ध) — $^{e}$) D2 4 5 कीर्ति D1 पुण्या G1 यशो, M4 शयो (for यशो) Bo लोके, G1 लोका — $^{f}$) D7 T G1-3 स्व, G4 lacuna (for च) K5 V1 B Da Dn D2 3 5 6 8 रात्तमचम, M च नराधिप (for च जना°) — After 10, the sequence in G1 is $13^{ab}$, $12^{cd}$, $12^{ab}$, $13^{cd}$

11 G1 om 11 — $^{a}$) D4 सर्वे K4 तस्यादृता, D2 6 °दृता (for °दृता) — $^{b}$) Da चास्यैते D7 यत्र (for त्रय) D8 चादृता — $^{c}$) D2 अनादृतास्; D4 °दृतोन्, G2 अनुद्रुतान् (for अनाद°) M च (for तु)

12 For the sequence in G1, cf v l 10 — $^{a}$) Dn न चाय, G1 नैवास्मिन (for °य) D5 T2 [अ]-परो (for परो) D1 T1 लोके — $^{b}$) K8 D4 [अ]पि च, M [अ]स्ति च (for चैव) D7 T G2-4 न यश स्तस्य भारत, G1 यशस्तस्य प्रकाशते — $^{c}$) G1 अपि माता (for अमानिता)

13 Da2 om $13^{a}$–$14^{c}$ For the sequence in G1, cf. v l 10 — $^{a}$) D4 नास्मिन च K1 पर — $^{b}$) K1 चैव, D4 तस्मिन् (for तस्य) — $^{c}$) S यदन्यदपि (for न चान्य°) — $^{d}$) K2 पारत्य, K5 V1 B Da1 Dn D2 3 5 6 8 G1.3 परत्र, D1 corrupt

14 Da2 om $14^{abc}$ (cf v l 13) — $^{a}$) Cv पुन्य (for तेभ्य) K8 D4 T1 G स तत, K5 B2 Dn D2 3.5 6 M2 हि यत्, V1 Bo-3 4 5 Da1 D8 Cv [अ]स्मि यत्, D1 lacuna, T2 मत (for तु तत्) B4 पूर्वं D7 त एव समस्तस्तं — $^{b}$) K1 8 D4 कृत्या या, K5 V1 Bo 2-5 D2 3 5 6 8 Cv कृत्वा यद्; Da1 Dn M कृत्वा च, G1 कृत्य यं (for कृत्यया) K1-4 D1 4 M [अ]भि (for विसृ) B1 कृत्वा परिसृजाम्यह, D5 T G2-4 कृत यस्विसृ (T2 यश्च सृ)जाम्यह — $^{c}$) D2 3 5 6 उदासीन (for तदासीन्मे) D4 -गण; D6 -गुण — $^{d}$) D4 सहस्रगणम् — $^{e}$) G1 तस्मिन् D1 सु (for म ) D4 8 -प्रकाश्य (D8 °श )ते

15 =(var) B 13 105 $14^{c}$–$15^{b}$, Manu 2 145 — $^{a}$) K1 D1 दशैवर्त (for °व तु) B1 सदाचर्य, D1 °चार्या — $^{b}$) B1 D4 श्रोत्रियाद् B1 अभिरिच्यते, D7 S अधितिष्ठति — $^{c}$) D4 दशाचार्यम् (for °चार्यान्) — $^{d}$) K1 8 D2 उपाध्यायात् K4 उपाध्यायान्विता दश

16 $^{a}$) K1 पितॄनां शत मातैका; B1 पितुर्दश (also पिता दश )गुणा माता, B2 Da पितॄन्दशैका तु माता — $16^{cd}$ = (var) B 13 105 $15^{cd}$ — $^{e}$) K5 B8 4 Dn D3 5 6 [अ]तिभवति, T1 [अ]पि भ° (for [अ]भिभ°) — $^{d}$) D6 मतो (for -समो) — $^{e}$) D4 गरीयात्

17 $^{a}$) K5 D2 3 5 6 8 तु, Dn2 च (for हि) — $^{b}$) D7 M2 जन्मनी K2 8 व्यप (K8 °व )युज्यत, K5 V1 B Da Dn D5 6 8 [ए]वोपयुज्यत° (B1 °ते), D2 8 [ए]वोपयुजत°, D4 व्यवजायत, D7 G2 M2 4 ह्युपयुजत° (D7 m °भुजत ; M2 4 °युज्यत°), T2 [अ]भ्युदय जित° (for व्युपयुज्यत°) T1 G1.3 4 जन्मनाभ्युदयुजत° (G1 °त) — $17^{cd}$ = B 13 105 $18^{cd}$ — $^{e}$) K2 3 5 V1 B Da Dn D2 3 5 6 8 एव, G2 एत (for एतौ) G1 सृजता — $17^{ef}$ = (var) B 13 105 $19^{ab}$, cf 5 44 5, Manu 2 148 — $^{e}$) D4 आचार्य K4 D4 -शिष्ट, K5 D7 S ( except T2) सृष्टा

C 12 4009
B 12. 108 21
K 12. 108 21

न संदुष्यति तत्कृत्वा न च ते दूषयन्ति तम् ।
धर्माय यतमानानां विदुर्देवाः सहर्षिभिः ॥ १८

य आवृणोत्यवितथेन कर्णा-
वृतं ब्रुवन्नमृतं संप्रयच्छन् ।
तं वै मन्ये पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ १९

विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते
प्रत्यासन्नं मनसा कर्मणा वा ।
यथैव ते गुरुभिर्भावनीया-
स्तथा तेषां गुरवोऽप्यर्चनीयाः ॥ २०

तस्मात्पूजयितव्याश्च संविभज्याश्च यत्नतः ।
गुरवोऽर्चयितव्याश्च पुराणं धर्ममिच्छता ॥ २१

येन प्रीताश्च पितरस्तेन प्रीतः *पितामहः ।
प्रीणाति मातरं येन पृथिवी तेन पूजिता ॥ २२

---

(for शिष्टा) —$^f$) V1 B D8 M सत्या सा; D2 8 5. 6 शि(D6 सि)ष्टा सा, D7 T G सम्यग्सा (for दिव्या सा) D4 [अ]जरामरा

18 $^a$) K1 अवध्यौ, D7 T G न वध्या D1 महा-माता —$^b$) D4 7 M [उ]पका(D7 °चा)रिणौ; T1 G2–4 [अ]पचारिणौ (for °कारिणौ) B1 पिता वा कार्यं कारिणौ —$^c$) Ś1 K1 4 Da D1 4 न च; K6 V1 B0 2–5 D2 3. 6 T2 M4 न स; B1 तम-; D7 T1 G1 3 4 स न (for न स) G4 तुष्यति (for -दु°) M4 सत्कृत्य (for तत्कृत्वा) M1–3 न सदुष्यति सत्कृत्या (M3 °त्य), Cv न स दूष्यति यत्कृत्वा ❀ Cn तत्, वध्यानामपि तेषामवधं कृत्वा तेऽपराधिनोपि पितृमातृगुरवः अवधेन राजानमिव नैन दूषयन्ति । राजा हि वध्यानामवधं कृत्वा दुष्यति तद्वन्नात्रेत्यर्थः । ❀ —$^d$) T2 ये (for ते) D1 मूषयति —$^e$) B5 Da धर्मार्थं (for °य) —$^f$) D5 om (? hapl) from सह up to कृत (in 19$^d$) K1 5 B1. 3 Dn D2 3 6 8 महर्षिभि, B5 सहर्षभै

19 = (var) 5 44 7, cf. Nirukta II 4, Manu 2 144, Vāsisthadharmaśāstra II 10, Visnusmrti 30 47. D5 om up to कृत (cf v l 18) —$^{ab}$) K3 यथावृणोति, B1 यमा°, Dn D3 यश्चा°, M1. 3 4 य आतृणो(M4 °ण)ति (for °वृणोति) Ś1 K1 4 V1 [अ]वितृतेन; Da D4 [अ]वि(D4 °ति)वृत्तेन (for °तथेन) K2 3 5 V1 B0 2–5 Da Dn D2 6–8 G1 2 M2 कर्मणा ऋत (Da कृतं; D2 6 ऋत); K4 T1 G3 4 M1 3 कर्मणावृत; B1 कर्मणा स त (for कर्णावृत) T2 य आत्मत्राण कुरुते न कर्मणावृतं (for 19$^a$) Ś1 K1 ध्रुव न मृतं, K4 ध्रुवं नम्यत, B1 Da ब्रुवन्न नृत; B3 वदन्नमृत, T2 M4 कुर्वन्न°, G1 पिबन्न° (for ब्रुवन्न°) K5 Dn D2 स प्रयच्छन्, B1 2 सनि°; M4 सप्रयच्छत् —$^c$) K2 3 5 Dn2 M4 तं वै मन्येत, D4 संतविमन्ये (sic), D7 T G M2 त मन्येथा; M1 3 त्वं वै मन्ये —$^d$) B2 तस्मिन् K1 G1 द्रुह्ये, D7 T1 G3 4 द्रूष्येत्

20 Cf Nirukta II 4, Vāsisthadharmaśāstra II. 11 —$^a$) K4 D1 विद्या, D7 विद्वान्. B1 श्रद्धां (for श्रुत्वा) T2 G1 गुरून् K4 नाश्रियत; D1 M4 नाद्रि(M4 °म्रि)यते (for नाद्रि°) —$^b$) K3. 5 V1 B Da Dn D2–6 8 M प्रत्यास(D4 M °प)न्ना; D7 T1 G प्रत्युत्पन्ना; T2 प्रत्यासन्नान् (for °सन्न) K1 व°, D3 च — After 20$^{ab}$, Ś1 K1–4 B1 2 Dn D1. 4 7 T G2–4 ins.

248* तेषां पापं भ्रूणहत्याविशिष्टं
न चास्य तद्ब्रह्मफल ददाति ।

[(L 1) = 26$^c$ Ś1 D1 भ्रूण (for भ्रूण) —(L. 2) K3 B1 2 Dn D4 7 T G2–4 नान्यस्तेभ्य° (D4 तेभ्यो नान्य, D7 T1 G2–4 तस्मान्नान्य; T2 तस्मान्नान्यत्) पाप कृदस्ति लोके (cf 26$^d$).]

—$^c$) Ś1 K4 तथैव ते; K1 ते एव*; V1 B0. 3–5 Dn1 D3 5 7 यथैवैते, M यथा च ते (for यथैव ते) —$^d$) D6 यथा, D7 S तथैव (for तथा) B2 D7 G1 M [ऽ]भ्यर्चनीया, T G2–4 ह्यर्च° (for ऽप्यर्च°)

21 $^a$) D7 T G ते (for च) —$^b$) D1 सविभज्यश्. M2 सर्वश° (for यत्नत°) V1 सविभज्य प्रयत्नत° —$^c$) D7 T1 G1. 3 4 ते (for च) D4 गुरवोप्यर्चनीयाश्च —$^d$) D1 4 पुराणां (D4 °ण). T1 G4 इच्छत°

22 $^a$) K1 D7 S प्रीणाति, K2. 3 5 V1 B Da Dn D2 3 5 6 8 प्रीणाति (for प्रीताश्च) K2 3. 5 V1 B D (except D7) पितर (D1 °रा) (for °रस्) —$^b$) K1 D1 येन (for तेन) M1 3 transp तेन and प्रीत° K3 5 V1 B Da Dn D2–5 7 8 S प्रजापति° (for *पितामह) Ś1 K1 2 4 D1 तेन प्रीता° पितामहा° —$^c$) K1 प्रीणति; D4 प्रणाति K1 D1 मातरो; D7 S जननी (for मातरं) D1 यो हि (for येन)

येन प्रीणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितम् ।
मातृतः पितृतश्चैव तस्मात्पूज्यतमो गुरुः ।
ऋषयश्च हि देवाश्च प्रीयन्ते पितृभिः सह ॥ २३
न केनचन वृत्तेन ह्यवज्ञेयो गुरुर्भवेत् ।
न च माता न च पिता तादृशो यादृशो गुरुः ॥ २४
न तेऽवमानमर्हन्ति न च ते दूषयन्ति तम् ।
गुरूणामेव सत्कारं विदुर्देवाः सहर्षिभिः ॥ २५
उपाध्यायं पितरं मातरं च
येऽभिद्रुह्यन्ति मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
तस्मान्नान्यः पापकृदस्ति लोके ॥ २६
मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च ।
चतुर्णां वयमेतेषां निष्कृतिं नानुशुश्रुमः ॥ २७
एतत्सर्वमतिदेशेन सृष्टं
यत्कर्तव्यं पुरुषेणेह लोके ।
एतच्छ्रेयो नान्यदस्माद्विशिष्टं
सर्वान्धर्माननुसृत्यैतदुक्तम् ॥ २८

C. 3. 4022
B. 12. 108. 23
K. 12. 109. 23

इति श्रीमहाभारते शान्तिपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

23 $^{a}$) D5 om (? hapl) from प्रीणाति up to देवाश्च (in 23$^{c}$) M1 प्रीणति K1 D4 7 T1 G1 2 M उपाध्यायम् (K1 D4 °य) (for °ध्याय) G3 4 प्रीणात्युपाध्यायो येन — $^{b}$) D8 मातर (for मातृत) — V1 reads 23$^{cf}$ on marg D4 repeats it after 24 and ins 249* thereafter — $^{c}$) K1 B2 D2 3 5 7 S चैव (for च हि) — After 23, N (except D7, V1 on marg, D4 after 24) ins

249* पूज्यमानेषु गुरुषु तस्मात्पूज्यतमो गुरु ।

24 $^{a}$) K8 D4 7 S (except M2) न च केन च (G3 केचन), K5 V1 B Dn D3 5 6 8 न च केनचि(D5 °वि)द्; Dn केनचित्र च, D1 न केन चैव (for °नचन) — $^{b}$) D4 अवज्ञेयो — $^{c}$) B1 नापि (for the second न च) — $^{d}$) K3 6 V1 Bo 1.2-5 Dn D2 3 5 6 8 मन्यते, G1 यादृशौ (for तादृशो) Ś1 K1 T2 यादृशस्तादृशो गुरु — After 24, D4 repeats 23$^{cf}$ and ins 249*

25 $^{a}$) G1 वा मानम्, G2 न मा° (for ऽवमा°) D1 न ते न मानसं इति — $^{b}$) K4 तेषा (for च ते) K5 Dn D2 3 6-8 S न ते(T2 M2 चै)षा दूषयेत्कृतं (D8 °त्कृत, G2 °त्कर्य) — $^{c}$) M2 सताप (for सत्कार) — G2 repeats 25$^{d}$ after 28$^{abc}$ — $^{d}$) K5 B1 8 Da Dn D2 3 5 6 8 महर्षिभि (for सह°)

26 $^{b}$) D1 यो, D5 यद् K2 B1.2 Dn [ऽ]भिद्रुह्यते, K5 V1 Bo 2-5 D2-4 6-8 T1 G द्रुह्यते, D5 उत्पते, T2 द्रुह्यति, M1 2 4 [ऽ]भिद्रुद्रुह (for °द्रुह्यन्ति) T2 G1 च (for वा) — With 26$^{cd}$, cf 248*, 250*, lines 3-4 — $^{c}$) Ś1 भ्रूण (for भ्रूण) — $^{d}$) D4 तेभ्यो (for तस्मान्) — After 26, K5 V1 B Da Dn1 D2 3 7 T G M1-3 ins

250* भृतो वृद्धो यो न बिभर्ति पुत्र
स्वयोनिज पितर मातर च ।
तद्वै पाप भ्रूणहत्याविशिष्टं
तस्मान्नान्य पापकृदस्ति लोके ।

[(L 1) B1 वृत्तो, D2 3 हतो, G2 मृत-, M1.3 हृतो (for भृतो) D7 T G M1-3 भर्तारं (for वृद्धो) D2 ये. —(L 2) D7 म योनिज, T2 निज चेद; M2 सयोनिज (for स्वयोनिज) D2 वा (for च). —(L 3) D7 T G M1-3 पाप तस (for तद्वै पाप) —(L 4) T2 transp तस्मात् and नान्य ]

27 $^{a}$) Dn2 D8 मित्रद्रोही (D8 °ह), M1 3 4 पितृद्रुह (for मित्र°) Dn3 कृतघ्नश्च — $^{b}$) G4 damaged from स्त्रीघ्नस्य up to नि (in 27$^{d}$) B1 M1 om स्त्रीघ्नस्य Dn गुरुघातिन; G1 गुरुविद्विष (for पिशुनस्य च) — $^{c}$) B5 Dn1 D2 3 5 6 स्वयम्, D7 S (except M1, G4 damaged) अपि च (for वयम्) — $^{d}$) D4 निष्कृतिं, T2 G1.2 निष्कृतिर् K5 V1 B Da Dn2 D2 3 5 6 8 T1 नानु(D5 ना च)शुश्रुम (for °श्रुम°)

28 $^{a}$) K5 B2 Dn1 अनिर्देशेनैवमुक्तं, V1 Bo 2-5 अखिलेनैवमु(B5 °व यु)क्त, B1 Dn2 D2 3 5 6 8 अनिर्देशेन सु(D8 सृ)ष्ट, D4 अनिर्देश्य न दृष्ट, D7 S अनुनिर्देशादृष्टं (D7 °दृष्ट, G1 °त्वष्टं) (for अतिदेशेन सृष्टं) — $^{b}$) T2 G1 उपासव्य (for यत्कर्तव्य) D7 S किंचिद् (for लोके) — $^{c}$) B1 से यो (for श्रेयो) B1 अस्मिन् — After 28$^{abc}$, G3 repeats 25$^{d}$,

# ११०

C 12 4023
B 12 109 1
K 12 109 1

युधिष्ठिर उवाच ।
कथं धर्मे स्थातुमिच्छन्नरो वर्तेत भारत ।
विद्वञ्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ १
सत्यं चैवानृतं चोभे लोकानावृत्य तिष्ठतः ।
तयोः किमाचरेद्राजन्पुरुषो धर्मनिश्चितः ॥ २
किं स्वित्सत्यं किमनृतं किं स्विद्धर्म्यं सनातनम् ।
कस्मिन्काले वदेत्सत्यं कस्मिन्कालेऽनृतं वदेत् ॥ ३
भीष्म उवाच ।
सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
यद्भूलोके सुदुर्ज्ञातं तत्ते वक्ष्यामि भारत ॥ ४
भवेत्सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत् ।
यत्रानृतं भवेत्सत्यं सत्यं वाप्यनृतं भवेत् ॥ ५
तादृशे मुह्यते बालो यत्र सत्यमनिष्ठितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥ ६
अप्यनार्योऽकृतप्रज्ञः पुरुषोऽपि सुदारुणः ।
सुमहत्प्राप्नुयात्पुण्यं बलाकोऽन्धवधादिव ॥ ७
किमाश्चर्यं च यन्मूढो धर्मकामोऽप्यधर्मवित् ।
सुमहत्प्राप्नुयात्पापं गङ्गायामिव कौशिकः ॥ ८

Colophon — *Sub parvan* K V1 B1-4 Da Dn D1-7 T G1 3 4 M राजधर्म — *Adhy name* Ś1 K1 2 गुरुवृत्त; K3 D4 M2 गुरुवृत्तिर्, Da1 मातृपितृगुरुमाहात्म्ये, D7 T1 G2.3 आचार्यप्रशंसा; G1 damaged, M1 3 गुरुपूजास्तुति. — *Adhy. no* (figures, words or both) K1 111, B1 95; B2 4 Dn1 107, ... Da1 109 (as in text), Da2 Dn2 108, D2 3 105, D7 S (G1 damaged) 110 — *Śloka no* Dn1 34, Dn2 D3 33.

## 110

1 D3 om the ref. — a) D7 S तत्त्वं (for विद्वन्) M2 जिज्ञासमानस्य. — d) Da ते ब्रूहि; D1 प्रकर्हि (sic) (for प्रब्रूहि)

2 a) Da M1 2 4 चैव; M3 चोभौ (for चोभे) — b) K1 लोकावावृत्य, D1 °नावृत्ति, G1 लोकोनावृत्य B4 तिष्ठत; Da °ति, M1 3 °तं — c) M2 आचरन् (for °रेद्). V1 B1 D2 3 5 राजा, Da जातु (for राजन्) — d) D4 7 S निश्चय (D4 °ये) (for -निश्चित).

3 B4 damaged — a) D4 के स्वित् — b) B1 3 Da D2 3 5-8 S धर्म — c) T3 किं स्वित्, M4 तस्मिन् (for क°) D3 लोके (for काले). — d) D7 T2 G2-4 M चापि, D3 लोके (for काले) B1 भवेत् (for वदेत्). G1 कर्तव्यमनृतं भवेत्

4 Cf. B. 8. 69. 31. D3 om the ref. — a) B6 सत्यं हि; Dn1 यत्सत्य- (for सत्यस्य). G1 सत्यस्य सत्यवचनं. — b) G1 साधुस्तद् (for न सत्याद्) — G1 om. 4c-5d. — c) B1 यत्र लोके; B2.4 D2 3 यत्तु लोके (for यद्भूलोके) K1 सुदुर्ज्ञानं; K3 D4 7 S (G1 om.) °ज्ञेय (for °ज्ञातं) K2 3 V1 B6 2 3 Da Dn D2 3 6 यत्तु लोकेषु दुर्ज्ञानं — d) B1 तत्र; Dn1 तत्र (for तत्ते).

5 Cf B 8 69. 32. — a) M भवन् C... — b) B3 damaged G2 यत्तुनपि (for यत्रानृतम्). — K1 om (hapl) 5cd — d) B1 om सत्यं. V1 च, M2 lacuna (for वा) D4 [अ]नृतं (for [अ]नृतं).

6 B3 damaged — a) K2 3 4 V1 B6 2-4 D (except D1) S (except M3) मु(V1 मा)ह्यते K2 4 V1 B6 2-4 Dn D2 3 5-8 S पश्यते; Da Ca n पश्यते; D1 सह्यते (for मु°) D7 S पापो (for बालो) — b) K (except K2) V1 B1 Da D2 3 4 8 अनुष्ठितं; B2 (marg) अनिश्चितं D7 S यस्य सत्यमनिश्चितं — 6cd = B 8 69. 35cd.

7 Cf B 8 69 36 Ś1 K1.4 D1 repeat 7ab after 8ab. D3 reads 7a-8b twice — a) D3 [अ]नार्यो (for °र्यो). D1 (first time) G1 [ऽ]कृतप्रज्ञ; M4 [ऽ]भयप्रज्ञ — b) B3 Da T2 G1 च (for ऽपि). Dn [अ]पि; D7 T1 G2-4 [अ]पि; T2 तु (for सु-) Da D4 -दारुणं (D4 °णा). — c) D4 महत्सु (for सुमहत्) — D3 transp 7d and 8d — d) Ś1 K1 D1.4 बा(D1 ब)लको; Da1 D1 बाला°; M1 3 4 बला°; Cn बलाको (as in text) D1 -वधादिषु (for °दिव).

8 Cf B 8 69 37 For the repetition in Ś1 K1 4 D1, cf. v.l 7. — a) K3 आश्चर्यं. T2 तन् (for यन्). — b) K1 धर्मकामेषु (for °कामोऽपि).

ताद्दशोऽयमनुप्रश्नो यत्र धर्मः सुदुर्वचः ।
दुष्करः प्रतिसंख्यातुं तर्केणात्र व्यवस्यति ॥ ९
प्रभावार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यत्स्यादहिंसासंयुक्तं स धर्म इति निश्चयः ॥ १०
धारणाद्धर्म इत्याहुर्धर्मेण विधृताः प्रजाः ।
यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ॥ ११
श्रुतिधर्म इति ह्येके नेत्याहुरपरे जनाः ।
न तु तत्प्रत्यसूयामो न हि सर्वं विधीयते ॥ १२
येऽन्यायेन जिहीर्षन्तो धनमिच्छन्ति कर्हिचित् ।
तेभ्यस्तन्न तदाख्येयं स धर्म इति निश्चयः ॥ १३

C 12 4046
B 12.109 14
K 12.109 17

— c) Ś1 K. Dn D1 6 7 (before corr) 8 Cn पुण्य (for पाप) — D2 transp 7d and 8d — d) G1 कौशिकं. ‹ Cn कौशिक इत्युक्त गङ्गातीरे महत्तरा मर्षिणा स्थापितान्यण्डानि भित्वा महत्पुण्यं प्राप ›

9 a) D1 तादृशे — b) K2 सुदुर्विदु, K3 B (except B1) Dn D3 4 5 6 8 Cn °क्षम, D1 7 T G °विद (T2 °ध) (for °वच) — 9cd = (var) B 8 69 53ab — c) K3 4 5 Dn D1-5 दुष्कर (D1 °रं), B1 दुर्लभ D7 T1 G1-4 चापि, T2 G1 M परि (for प्रति) D2 °संधातुं (for °सख्यातु) — d) K5 V1 B (except B2) Da Dn D2 3 (inf lin as in text) तत्केन; D3 6 न केन (for तर्केण) Dn1 विनस्यति, M1 8 व्यवस्यते.

10 Cf B 8 69 56c–57b. — a) G1 damaged K1-6 V1 B (except B1) Da Dn D2 6-8 S (G1 damaged) प्रभवार्थाय M1 भूतानां (for भूताना) — b) D2 om. (hapl.) from धर्म (in 10b) up to स (in 10d) G1 धर्मं (for धर्म). — c) K1 4 य (for यत्) V1 B1 3 4, 6 D8 प्रभव (for अहिंसा) K2, 6 B3 Da Dn D1 7 S य (B3 यत्) स्यात्प्रभव (D7 T G2-4 °दहिंसा, G1 °प्रभाव) संयुक्त (M1, 8 °क्त) — K3 V1 B Da D2-8 T G1 3 4 M1, 3, 4 ins after 10 Dn after 11

251* अहिंसार्थाय भूतानां धर्मप्रवचन कृतम् ।
यत्स्यादहिंसासयुक्त स धर्म इति निश्चय ।

[(L 1) Bo अहिंसया हि, D2 5 6 °न्याय — After line 1, G1 erroneously reads line 3 and the prior half of line 4 of 252* — Bo om line 2 — (L 2) = 10cd G1 om the prior half V1 B3 4 Dn D4 य (for यत्) T G2 3 M1 2 4 य स्यादहिंसासयुक्त ]

— T G1 3 4 M1 3 4 cont G2 M2 ins after 10

252* अहिंसा सत्यमक्रोधस्तपो दानं दमो मति ।
अनसूयाप्यमात्सर्यमनीर्ष्या शीलमेव च ।
एष धर्म कुरुश्रेष्ठ कथित परमेष्ठिना ।
ब्रह्मणा देवदेवेन अयं चैव सनातन ।
अस्मिन्धर्मे स्थितो राजन्नरो भद्राणि पश्यति । [5]
श्रौतो यथात्मको धर्म अहिंसा परमार्थिक ।

[(L 2) T2 G1 M1 न चेर्ष्या, M1 3 4 अपे° (for अनी°) — G1 reads line 3 and the prior half of line 4 (for the first time) after line 1 of 251* — (L 5) G1 पश्यति (for भद्राणि) — (L 6) T2 श्रौते, M3 °तौ T2 हिंसात्मको (for यथा°) G1 M4 पारमार्थिक ]

11 Cf B 8 69 58 K3 4 D1 om. (hapl.) 11 — a) G2 om धारणा K2, 6 V1 B Da Dn2 D2 3 6-8 T G धर्मम् (for धर्म) — b) Ś1 K1 विवृता; B1 विहिता, D7 S च धृता (for विधृता) — c) Da यस्माद्; D6 य स्याद् V1 सयुक्तः K3 4 B2-5 Dn D7 S य स्याद्धारणसंयुक्त; D4 यस्यात्माधारण युक्तं. — After 11, Dn ins 251*, while D4 ins.

253* हितं स्यात्र भूतानां पतितानां सुसंकटे ।

12 Cf. B 8 69 55c–56b K3 om 12ab. B1 reads 12ab on marg — a) K6 D. 6 8 T1 G1 M श्रुतिधर्मम्; V1 Bo 6 T2 श्रुतिर्धर्म (T2 °र्मम्), B1 D2 8 G2-4 श्रुतिं धर्मम्; B2 damaged, B4 D7 श्रुतिं धर्मं, D1 श्रुतिवर्म (for °धर्म) D7 S यदत्यन्ये (for इति ह्येके) — b) Ś1 येप्याहुर; K1 ह्रेप्या°; K4 D1 ये प्राहुर् (for नेत्या°) D7 T1 G1-4 मानान्याहु परे जना — c) K3 V1 B च (for तु). K8 D4 तान् (for तत्) Ś1 Bo [अ]सूयामे (Bo °नो) B2 तं तु प्रत्याभ्यसूयामो; D7 S न हि त स्व(T2 त स्व-; G1 M तान्)म्यसू(D7 G3 4 °भू)याम — G1 reads 12d twice. — d) D7 G1 (first time) 3, 4 M स हि धर्मो; T2 G1 (second time) न हि धर्मो

13 13ab = (var) B. 8 69 59ab. — a) B1 ये नान्येन; D1 येत्यानेन (sic), D4 अन्यायेन (for येऽन्या°) D1 जिहीर्षतो; D4 जिगीर्षति, G2 M2 जिही(G2 °गी)र्षंतो (for °र्षन्तो) — b) G2 धर्मम् (for धनम्) D3 6 इच्छति; M1, 3 4 पृच्छति. K3, 6 V1 B Da Dn D4, 8 M1 8 कस्यचिद् (for कर्हि°) — c) K1 तत्तु; K4 5 V1 B D (except D1) T G1-4 तु न (D4 तत्र)

C 12. 4245
B 12. 115. 15
K 12. 115. 15

हितैषी कुलजः स्निग्धः स राज्यफलमश्नुते ॥ १४
मन्त्रिणो यस्य कुलजा असंहार्याः सहोषिताः ।
नृपतेर्मतिदाः सन्ति संबन्धज्ञानकोविदाः ॥ १५
अनागतविधातारः कालज्ञानविशारदाः ।
अतिक्रान्तमशोचन्तः स राज्यफलमश्नुते ॥ १६
समदुःखसुखा यस्य सहायाः सत्यकारिणः ।
अर्थचिन्तापरा यस्य स राज्यफलमश्नुते ॥ १७
यस्य नार्तो जनपदः संनिकर्षगतः सदा ।
अक्षुद्रः सत्पथालम्बी स राज्यफलभाग्भवेत् ॥ १८
कोशाक्षपटलं यस्य कोशवृद्धिकरैर्जनैः ।
आप्तैस्तुष्टैश्च सततं धार्यते स नृपोत्तमः ॥ १९
कोष्ठागारमसंहार्यैराप्तैः संचयतत्परैः ।
पात्रभूतैरलुब्धैश्च पाल्यमानं गुणीभवेत् ॥ २०
व्यवहारश्च नगरे यस्य कर्मफलोदयः ।

---

15–17 — $^{a}$) D6 ह्यस्य (for यस्य) T2 कुशला (for कुलजा) — $^{b}$) Ś1 K1. 2 4 D1 सुसहाया॰; M1 असहार्या (for असहार्या॰) K3 D7 T G2 4 M2 सुखोषिता॰; D1 M1 8 सुहो॰ (for सहो॰) ❀ Cn असहार्या उत्कोचादिना अभेद्या । ❀ — $^{c}$) K4 T1 G4 नृपते- (for नृपतेर्) K1 मतिदास्यति, K8 Dn D4 मतिदा. संत॰; K5 मतिं दास्यति, D7 T2 G3 M मतिमाप्स्यति (D7 T2 ॰ते), T1 G4 यातिमाप्स्यते — $^{d}$) V1 Da M2 8 सर्वंधि; D7 G3 सत्पथ, T1 G4 सत्त्वद (for सबन्ध) V1 -ज्ञातिकोविदा॰, D1 -ज्ञानकोविद॰, D4 ज्ञातकेविदा॰

16 Bo om 16 (cf. v. l. 15). — $^{a}$) K1 8 अनागतं (for ॰गत) D1 विघातारा॰ — $^{c}$) K4 अशोचत॰, G2 अवोचत॰ (for अशोचन्त॰) — $^{d}$) D8 राज्य (for राज्य)

17 Bo om 17 (cf v 1 15) V1 reads 17 on marg — $^{a}$) K4 D8 समदुःखसमा (D8 ॰सुखो); D1 सुखदुःखसमा, M1 8 समदुःखसहा — $^{b}$) K (except K1 4) V1 B (Bo om) D (except D1) S (G3 missing) प्रिय (for सत्य) — Da2 repeats $17^{c}$–$18^{d}$ after 18 — $^{c}$) K8 V1 B1–4 Da Dn D4 T2 G1. 2 M1–8 सत्या॰; K5 राजन्, B5 D2. 3 5–8 T1 G4 सभ्या; M4 सधा॰ (for यस्य) — $^{d}$) Da1 राजा (for राज्य)

18 For the repetition in Da2, cf v. l. 17. — $^{a}$) K1 नोर्तो, K4 नातो; D1 नात्तो, M1. 8 नार्यो (for नार्तो) D4 यस्य जनार्तो जनपद॰ (hypermetric) — $^{b}$) K8 सनिकर्षयित॰, Dn2 ॰यत, T2 G1 ॰पर (for ॰गत॰) — $^{c}$) K4 अक्षुद्र — $^{d}$) Bo 1. 3–5 Dn2 D2 3. 5–8 S (G3 missing) राजा राज्य- (for राज्य फल-) K8 V1 B2 D1 4 स राज्य(K8 ॰ज्यं)फलमश्नुते.

19 D7 T1 G4 om. (hapl.) 19–20 — $^{a}$) K5 Dn D3 6 8 कोशाख्य, V1 B2. 3 Da कोपाक्ष; D3 5 कोषाख्य- (for कोशाक्ष-) M2 पटलो Bo 4 5 (marg as in text) कोषाभ्युपगमो यस्य, B1 कोपाक्षसकुटल यस्य (hypermetric) — D1 om $19^{b}$–$21^{a}$. — $^{b}$) V1 B1 2 कोप, Da2 कोपं (for कोश) K5 Bo 3–5 D2 3 5 6 8 -परैर्; Da1 -करं (for -करैर्) K3 3. 5 V1 B1 2 D (D1 7 om) T2 G1 2 M नरै (for जनै॰) — D4 reads $19^{c}$–$20^{b}$ after $21^{ab}$. — $^{c}$) Ś1 K1. 4 गुप्तैस्; Dn2 प्राप्तैस् (for आप्तैस्). T2 G1 2 M1 3. 4 पुष्टैश्च, M2 पुरुषैर् (for तुष्टैश्च) B1 तु (for च). — $^{d}$) Ś1 K4 चार्यते, K2. 3. 5 V1 B1–3 5 (marg) Da Dn D2 3 6 8 चीयते, Bo 5 धीयते, G2 संगतः (for धार्यते)

20 D1 7 T1 G4 om 20 (cf. v. 1 19). For the sequence in D4, cf v l. 19 — $^{a}$) Da2 कोषागारसमंहार्यैर्, D8 कोष्ठागारसस॰. ❀ Ca असंहार्य परैर्धनादिना लब्धुमशक्य । ❀ — $^{c}$) M4 पात्रपूतैर् K8 D5 अलुसैश् (for अलुब्धैश्) — $^{d}$) K5 गुणो (for गुणी-)

21 For the sequence in D4, cf v l 19 D1 om $21^{a}$ (cf. v. l 19) — $^{a}$) M1. 3 4 व्यवहारं D4 सु- (for च) — $^{b}$) D7 S (G3 missing) धर्म- (for कर्म-) — $^{c}$) K1 शंखलिखित; K8 शाखिलिखितस्; D1 शाखिकलिता॰; D4 सास्खलितधी॰; M1. 3. 4 शांख लिखित (for शङ्खलिखित॰). ❀ Cn यथा फलमात्रस्तेनेन शङ्खेन लिखितस्य हस्तच्छेदो राजानं प्रतिषेधयित्वा कारितस्तद्वत् (cf 12 24)। ❀ ❀ Ca b शङ्खलिखितो मुनिप्रणीत॰। शङ्खे कपाले [विधातृ-] लिखितो वा। ❀ — $^{d}$) Ś1 K1 4 D1 स कर्म, K2. 3 Dn2 स्वधर्म- (for स धर्म॰) K8 V1 B1–3 Da Dn1 D2. 4 S (G3 missing) नृप (for भवेत्).

22 K5 om. $22^{ab}$ — $^{a}$) K4 संग्रहीत-, D1 संगृहेत, D8 संगृहीते (for संगृहीत-). M4 -मनुष्यैश् (for ॰ष्यश्). — $^{b}$) D4 राज्य- (for राज) — $^{c}$) K1 प्रतिगृहान्स; K5 प्रतिशक्नोति, V1 Bo 2 4, 5 Da Dn D2, 3

दृश्यते शङ्खलिखितः स धर्मफलभाग्भवेत् ॥ २१
संगृहीतमनुष्यश्च यो राजा राजधर्मवित् ।
षड्वर्गं प्रतिगृह्णन्स धर्मात्फलमुपाश्नुते ॥ २२

इति श्रीमहाभारते शान्तिपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

# ११७

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निदर्शनकरं लोके सज्जनाचरितं सदा ॥ १
अस्यैवार्थस्य सदृशं यच्छ्रुतं मे तपोवने ।
जामदग्न्यस्य रामस्य यदुक्तमृषिसत्तमैः ॥ २
वने महति कस्मिंश्चिदमनुष्यनिषेविते ।
ऋषिर्मूलफलाहारो नियतो नियतेन्द्रियः ॥ ३
दीक्षादमपरः शान्तः स्वाध्यायपरमः शुचिः ।
उपवासविशुद्धात्मा सततं सत्पथे स्थितः ॥ ४
तस्य संदृश्य सद्भावमुपविष्टस्य धीमतः ।
सर्वसत्त्वाः समीपस्था भवन्ति वनचारिणः ॥ ५
सिंहव्याघ्राः सशरभा मत्ताश्चैव महागजाः ।

C 12.4259
B 12.116 6
K.12.116 7

°गृह्णाति (for °गृह्णन्स) K2 षड्वर्गंवान्प्रगृह्णते; B1 2 D2. 5. 6 सत्त्वज (B1. 2 षड्ग) प्रतिगृह्णाति, D4 स्वड्वर्गं च प्रगृह्णन्स, D7 S (G3 missing) षड्भाग परिगृह्ण( G1 °ह्णा )न्स — d) D1 अवाप्नुयात् (for उपाश्नुते). K2 धर्मात्मा फलमश्नुते; K2 4 V1 B Da Dn D2–6 8 स धर्मफलमश्नुते, D7 T1 G1. 2 4 M धर्मं (G2 M1. 2 4 धर्म्यं) फलमुपाश्नुयात, T2 धर्म्यं स फलमाप्नुयात्.

Colophon G3 missing —*Sub-parvan* Ś1 K V1 B D (except D4 8) S (G3 missing) राजधर्म —*Adhy name* D7 T1 G2 4 मृत्यमन्त्रिलक्षण, M1-3 महापमग्रहपरीक्षा —*Adhy no* (figures, words or both) K6 118, B1 105, B3. 4 Dn1 114; Da1 Dn2 115, D7 S (G3 missing) 117, D8 113 —*Śloka no* Da1 22½, Dn1 23, Dn2 22, D2 111 (?)

## 117

☞ G3 is missing for this adhy (cf v l. 12 112 1)

1 Before the ref, D7 S (G3 missing) ins

268*    युधिष्ठिर उवाच ।
  न सन्ति कुलजा यत्र सहाया पार्थिवस्य तु ।
  अकुलीनाश्च कर्तव्या न वा भरतसत्तम ।

[(L. 1) M2 4 यस्य (for यत्र) — (L 2) G2 भारत- M2 -उत्तमा ]

— c) K3 निदर्षनकर; K5 V1 B0–4 Da Dn D2 6 8 G2 निदर्शन प( D6 व )र, B5 D7 T1 G1. 4 °र्शनपर — d) K4 Dn1 T2 सज्जनाचरिते (K4 °तुं). M2 पुरा (for सदा)

2 a) B0 तस्यैव, Da अस्येव; D8 अथैव (for अस्यैव) K1 [अ]क्षस्य (for [अ]र्थस्य) — b) Da यद्दृष्टं, D6 यच्छत (for यच्छ्रुत) K5 वै (for मे) Da तपोधन (for °वने)

3 b) G1 अमनुष्या (for °नुष्य). — c) M4 ऋषि — d) D1 नियते, D8 नियतौ

4 a) Dn2 -परि- (for -पर) B0 1. 3–5 D2 3. 5 7 8 T1 G2 4 -परिश्रांत (B1 °त, G2 °त-); M तपश्रांत (for -पर शान्त). Da श्रात (for शान्त) D6 दीक्षादमपरीश्रात; T2 °तपपरिश्रात; G1 °शनपरिश्रातो — b) B0 D6 स्वाध्याय. D1 -परमा (for परम) — d) Da2 सतपं (for सततं) M3 सपथे (for सत्पथे) Dn1 सतत त( Dn1 स )त्त्वमास्थित

5 a) D1 सदृश (for सदृश्य) Da1 समात्मम्, T2 तं भावम् (for सद्भावम्) — c) K (except K1) V1 B D (except D1 7) G2 सर्वे (for सर्वे)

6 a) K3 B0 6 G1 सिंहा (for सिंह-) K4 5 B3

C 12 4259
B 12 116 6
K 12 116 7

द्वीपिनः खड्गभल्लूका ये चान्ये भीमदर्शनाः ॥ ६
ते सुखप्रश्नदाः सर्वे भवन्ति क्षतजाशनाः ।
तस्यर्षेः शिष्यवच्चैव न्यग्भूताः प्रियकारिणः ॥ ७
दत्त्वा च ते सुखप्रश्नं सर्वे यान्ति यथागतम् ।
ग्राम्यस्त्वेकः पशुस्तत्र नाजहाच्छ्रा महामुनिम् ॥ ८
भक्तोऽनुरक्तः सततमुपवासकृशोऽबलः ।
फलमूलोत्कराहारः शान्तः शिष्टाकृतिर्यथा ॥ ९
तस्यर्षेरुपविष्टस्य पादमूले महामुनेः ।
मनुष्यवद्गतो भावः स्नेहबद्धोऽभवद्भृशम् ॥ १०
ततोऽभ्ययान्महावीर्यो द्वीपी क्षतजभोजनः ।
श्वार्थमत्यन्तसंदुष्टः क्रूरः काल इवान्तकः ॥ ११
लेलिह्यमानस्तृषितः पुच्छास्फोटनतत्परः ।
व्यादितास्यः क्षुधाभग्नः प्रार्थयानस्तदामिषम् ॥ १२
तं दृष्ट्वा क्रूरमायान्तं जीवितार्थी नराधिप ।

---

D8 च (K4 lacuna, B8 स) सरभा, B4 Dn2 D4 5 6 च शरभाः; D4 सरभसा (for सशरभा). K3 तस्यर्षे पशवश्चैव, Dn1 सिंहव्याघ्रगणाः क्रूरा — b) D1 मत्ताश्चैव, T2 समस्ताश्च, G1 समस्ताश्च — c) D4 द्विपिन॰ Bo 1 T2 खड्गि (for खड्ग॰) B2 ॰भाल्लुका, D4 भल्लूका, G1 भल्लूको — d) Bo भीमदर्शिन॰, D7 वनचारिण

7 a) G1 सुख D1 प्रश्नद॰; D4 प्रसदा; D8 प्रश्नद्दा (for ॰प्रश्नदा) — b) Da विशिताशना, D6 क्षतदर्शना (for ॰जाशना.) — c) Da तस्यार्थे; D1 corrupt (for तस्यर्षे॰) Ś1 K1 शिशवश्च; K4 D1 पशवश्च (for शिष्यवच्च्) G2 तस्य चर्षे शिष्यवर्गैश् — D8 om 7d — d) K6 न्यग्भूवन्, B1 स्यभूता॰, D4 निभृताः; D6 न्य*ता; D7 शीलज्ञाः; S (G8 missing) चित्तज्ञा॰ (M8 ॰ज्ञा) (for न्यग्भूता॰)

8 a) D7 S (G8 missing) उक्त्वा (for दत्त्वा). D4 तु (for च) Ś1 D1 तं (for ते) D4 सुखप्रश्नं, T2 सुख प्रश्न — b) D1 सर्वैर् (for सर्वे) Dn1 सुखागतं; Dn2 पथागतं, D7 S (G8 missing) यथा सुख (for ॰गतम्) — c) D1 श्राम्यंसेक॰ (sic), D4 याम्यस्त्वक॰ (sic), D8 सग्रामस्तेक॰ (corrupt) (for ग्राम्यस्त्वेक॰) D4 पशुश्चात्र — d) Ś1 K1 नाजहच्छा, B1 नाजहार; B4 नाजहाति, D1 corrupt; D4 G1 M4 न जहारस (G1 ॰च; M4 ॰स्वा) (for नाजहाच्छ्रा) K8 5 Dn स, K4 स्वा; D5 तं, D7 T G2 4 च (for श्रा) D2 8 6 सदा मुनिं (D6 ॰नि॰); G1 M4 महामुनि (for ॰मुनिम्)

9 a) K5 B1 4 D6–8 S (G8 missing) भक्त्या-नुरक्त॰, V1 Bo 2 8 5 Da D2 5 भक्ता॰ (for भक्तो॰) — b) B2 उपवास॰ (for ॰वास) D2 ॰कृशीबल॰ (sic) (for ॰कृशोऽबलः) — c) K3 V1 B2 4 Da Dn फलमूलोदकाहारः, K6 D4 फलमूल (D4 ॰लै॰) कृताहार॰, D7 S (G8 missing) ॰मूलोत्तराहार॰ — d) K8 शांति B1 कृष्टाकृतिर्; D7 G2 शिष्या॰ (for शिष्टा॰). D8 तथा (for यथा)

10 b) M4 पादमूलैर् K2–4 V1 B Da Dn D2 5 6 8 G2 M महामते, K6 D7 T1 G4 ॰मते॰, G1 ॰मुने (for ॰मुने॰). — c) K3–5 V1 Bo 2–5 Da Dn D2 3 5–8 S (except G2 M2 4, G8 missing) भावं; D1 भाव (for ॰व॰). — d) T2 M1 8 स्नेहसंधो (for ॰बद्धो)

11 a) Da1 भयान्; D1 [s]भ्यपन्, T2 G1 [s]भ्यगान्, M1 भूयान् (for ऽभ्ययान्) D7 S (except M2, G8 missing) महारौद्रो (G1 ॰द्रे); D8 ॰वीर्यं (for ॰वीर्यो) — c) N (D7 m as in text) स्वार्थम् (B2 श्वानम्) (for श्वार्थम्) K8 D4 T2 अत्यतम्; B1 D7 T G1 2 4 M अत्यर्थम् (B1 ॰र्थं) (for अत्यन्त) K2 B1 Dn ॰संतुष्ट॰, K8 D4 उद्युक्त॰; B2 सरुष्ट; B6 ॰संयुक्तः, Da1 ॰संदुष्टं; D7 उज्जुष्ट; T G1 4 M उत्कृष्ट॰, G2 उद्धृष्टः (for संदुष्ट॰) — d) K2–5 Dn2 D1 2 6 8 क्रूर (for क्रूर॰) G2 खल (for काल) Da इवापर॰, D7 S (G8 missing) इवांतकृत् (for इवान्तक॰)

12 a) D4 लेलिह्यमानस्; M2 सलेलिहानस्, M4 केलिहानस् (submetric) (for लेलिह्यमानस्) — b) K6 पृष्ठास्फोटन, B1 पुत्रा॰; D1 पच्छा॰; M पुच्छ॰ (for पुच्छा॰) D4 corrupt — c) Ś1 Da1 D1 व्याधितास्य॰; G1 व्यादितास्य K8, 4 V1 B2–5 Da Dn D2 3, 5 6 8 क्षुधासुम; Bo क्षुदासुम॰, B1 क्षुधा सुम॰; D1 G2 M1 3, 4 क्षुधामग्न॰, D7 T1 G4 ॰भग्न; T2 G1 ॰सक्त; M2 ॰पश्च (for ॰भग्न). — d) D4 प्रार्थयात B1 D4 सदामिषं; D1 तदामिषन् (for ॰मिषम्).

13 a) Dn1 transp तं and दृष्ट्वा — b) T2 G1 जीवितार्थं (for ॰तार्थी) V1 B Da D2 3 5 8 T G1, 2 4 M4 जनाधिप (B1 ॰प), D4 नराधिप॰ (for ॰धिप) — d) K1 3 महीपते; V1 Bo 2–5 Da D2, 3 5 7 8 S

प्रोवाच श्वा मुनिं तत्र यत्तच्छृणु महामते ॥ १३
श्वशत्रुर्भगवन्नत्र द्वीपी मां हन्तुमिच्छति ।
त्वत्प्रसादाद्भयं न स्यात्तस्मान्मम महामुने ॥ १४
मुनिरुवाच ।
न भयं द्वीपिनः कार्यं मृत्युतस्ते कथंचन ।
एष स्वरूपरहितो द्वीपी भवसि पुत्रक ॥ १५
भीष्म उवाच ।
ततः श्वा द्वीपितां नीतो जाम्बूनदनिभाकृतिः ।
चित्राङ्गो विस्फुरन्हृष्टो वने वसति निर्भयः ॥ १६
ततोऽभ्ययान्महारौद्रो व्यादितास्यः क्षुधान्वितः ।
द्वीपिनं लेलिहद्वक्त्रो व्याघ्रो रुधिरलालसः ॥ १७
व्याघ्रं दृष्ट्वा क्षुधाभग्नं दंष्ट्रिणं वनगोचरम् ।
द्वीपी जीवितरक्षार्थमृषिं शरणमेयिवान् ॥ १८
ततः संवासजं स्नेहमृषिणा कुर्वता सदा ।
स द्वीपी व्याघ्रतां नीतो रिपुभिर्नलवत्तरः ।
ततो दृष्ट्वा स शार्दूलो नाभ्यहंस्तं विशां पते ॥ १९

C 12.4275 B 12.116 22 K 12 116 23

(G2 missing) विशां पते (for महामते) K4 Dn D4 8 यत्तच्छृणुष्व (D2 यत्र शृणु) विशां पते; B3 यत्तच्छृणुष्व विशां पते

14 a) K1 Da1 D1 4 5 T1 G 4 स्वशत्रुर्, B1 स शत्रुर् (for श्वशत्रुर्) K1 भगवान् K2 3 4 V1 B D (except D1) S (G2 missing) एष (for अत्र) — b) T2 द्वीपिर् (for द्वीपी) K1 Bo 2 3 D 2 3 5 6 द्वीपी स्व( D3 5 कृ )तसंज्ञकः (= 11b) — d) All MSS (except Ś1 K1 D1, G2 missing) तस्मात् (for तस्मात्) D1 महामुनि, D2 °मुनः; M2 °मुने (for °मुने). — After 14, Dn ins

269* तथा कुरु महाबाहो यथाभयं न संभवेत् ।

Dn cont K1 2 3 V1 B Da D2 3 4 5 6 ins after 14

270* स मुनिस्तस्य विज्ञाय ज्ञातज्ञो भयकारणम् ।
स्वस्य मनोगतानां तमैश्वर्येणमन्वितः ।

[(L 1) Da1 मुनि (for मुनिस्). K1 reads post. half of line 1 and prior half of line 2 on marg B1 ज्ञाते न — (L 2) K1 2 V1 Bo 3 4 5 Da D2 6 8 स्वभूतानां (for मनोगतानां) K1 B1 2 D2 4 सर्व° (K2 कृत°, B1 कृत°, B2 स्वत°, D2 5 स्वत°) स्वभूतानां (for the prior half) B3 मनोगत (for नश्यं) K1 नश्यति ]

15 K2 D2 om the ref — a) K1 द्वीपिनां; B1 द्वीपिनः; M द्वीपिना (for द्वीपिन) — b) K2 मृत्योर्मे (submetric) (for मृत्युतस्ते) — c) D1 एतत्तु (for एष). Ś1 K1 4 Dn1 D1 5 6 स्वरूप°, D2 स्वं रूप° (for स्वरूप°) — d) Ś1 D1 भवति; K1 D1 T1 G (G2 missing) भवतु; D2 भव हि (for भवसि) D1 मित्रक; D2 M2 4 पुत्रक

16 Ś1 K V1 B Da Dn D1-6 T2 G1 4 om the ref — a) K2 B1 Dn2 D3 च; T2 स (for श्वा) D2 द्वीपिनां (for द्वीपितां) — b) D1 corrupt, D1 मेपूनद (for जाम्बूनद). D2 समाकृति (for निभा°) — c) D1 corrupt, M1 2 विस्फुरद्; M2 विस्फुरन् D1 दृष्टो (for हृष्टो) K1-3 4 Dn1 D2 T G1 2 4 चित्राङ्गो विस्फु(G1 2 4 °स्फु)रद्दृष्टो — After 16, K1 m 5 V1 B D (except D1 4 5) ins

271* स दृष्ट्वा स पुनर्द्वीपी आत्मनः सदृशं शुभम् ।
अविरुद्धस्तत्तस्य क्षणेन समपद्यत ।

[(L 1) K2 Dn D2 स पुनर्ने (for स पुनर्) K1 धने; Dn पशु (for शुभम्). — (L 2) K1 समुपपन्न, B1 समपद्यते (for °पद्यत). ]

17 a) T2 G2 ततोभ्यगात्, M2 °भ्यायात् (for °भ्ययात्) — b) Ś1 K2 4 व्या( K2 स्य )धितास्य°, Da corrupt, D1 व्याधितात्मा°, G1 व्यादितास्य (for व्यादितास्य) — c) B1 D1 1 T1 G1 2 4 द्वीपिन लेलिहन्वक्त्र (B1 °हसुमो, D1 °हन्सुद्दो), M1 2 स द्वीपिन लिहन्वक्त्र, M2 विनदन्लेलिहन्वक्त्र; M4 सं द्वीपिना लिहद्वक्त्रो — d) D1 भोजन° (for °लालस°)

18 a) K1 क्षुधामर्श, K2 °भिन्न; K4 °भग्न, K2 Bo 1 3- Dn D2 3 5 6 8 °क्षुभ; V1 B2 Da °विद्ध; D1 S (G2 missing) °सन्न (for °भग्न) — b) Da दंष्ट्रिनं B1 D1 S (G2 missing) वनचारिण (for °गो चरम्) — d) K2 D1 ऋषे; G1 मुनिं (for ऋषिं) K1 V1 Bo 2 Da1 D1 ईयिवान्; K2 D1 अभ्यया( K2 गा )त्, D1 T1 G2 4 अभियात् (for एयिवान्)

19 a) D1 सम्य (for तत) D1 सर्वासजं (sic) Dn सयावज पर स्नेहम् — b) D1 कुर्वतस् K2 2 V1 B D (except D1 4) T1 G1 M सदा (for सदा) — c) D2 यातो (for नीतो). — d) V1 reads from रिपु up to बलवान् (in 20b) on marg K5 Bo 2-3 Da D2 5, 6, 8, 8 रिपूणां; V1 B1 2 Dn रिपुतो, D1 S (G2 missing)

C 12.4276
B 12.116 22
K. 12.116 23

स तु श्वा व्याघ्रतां प्राप्य बलवान्पिशिताशनः ।
न मूलफलभोगेषु स्पृहामप्यकरोत्तदा ॥ २०
यथा मृगपतिर्नित्यं प्रकाङ्क्षति वनौकसः ।
तथैव स महाराज व्याघ्रः समभवत्तदा ॥ २१
व्याघ्रस्तूटजमूलस्थस्तृप्तः सुप्तो हतैर्मृगैः ।
नागश्चागात्तमुद्देशं मत्तो मेघ इवोत्थितः ॥ २२
प्रभिन्नकरटः प्रांशुः पद्मी विततमस्तकः ।
सुविषाणो महाकायो मेघगम्भीरनिस्वनः ॥ २३

तं दृष्ट्वा कुञ्जरं मत्तमायान्तं मदगर्वितम् ।
व्याघ्रो हस्तिभयात्रस्तस्तमृषिं शरणं ययौ ॥ २४
ततोऽनयत्कुञ्जरतां तं व्याघ्रमृषिसत्तमः ।
महामेघोपमं दृष्ट्वा तं स भीतोऽभवद्गजः ॥ २५
ततः कमलषण्डानि शल्लकीगहनानि च ।
व्यचरत्स मुदा युक्तः पद्मरेणुविभूषितः ॥ २६
कदाचिद्रममाणस्य हस्तिनः सुमुखं तदा ।
ऋषेस्तस्योटजस्थस्य कालोऽगच्छन्निशानिशम् ॥ २७

---

रिपुभ्यो ( for रिपुभिर् ) K1 ( marg ) रिपुनां बळवत्तर· — ᶠ ) D2 om. स. — ᶠ ) K2 नाम्यहंस्त; K3 B2 नाम्यर्हं ( B2 °ह ) तं, K5 V1 Bo 1 3–5 Da Dn D2 3.5 8 नाहनत्तं, D6 corrupt ( for नाभ्यहंस्तं )

20 V1 reads up to बलवान् on marg. — ᵃ ) B3 स तदा; M4 तत· श्वा ( for स तु श्वा ) V1 Bo 1 3–5 D2 3 5 6 8 यातो ( for प्राप्य ) — ᵇ ) D4 बलवन् K4 पिशिताशिन, D2 °तोशन.

21 ᵇ ) K1 corrupt, B1 2 Da प्राकाक्षत ( Da1 °त: ), G2 M2 प्रकांक्षति. — ᶜ ) D3 सु; T2 G1 च ( for स ) D1 माहाराज, D3 6 महाभाग ( for °राज ) — After 21, K4. 5 V1 B Da Dn D2–8 S ( G3 missing ) ins an additional colophon [ *Sub parvan* K4 5 V1 B Dn D2 3 5–7 S ( G3 missing ) राजधर्मं — *Adhy name* K4. 5 V1 B Da D2 3 5 6 श्व( K5 Da1 स्व )र्षिसंवाद·, D4 श्वात्त्रर्षिसंवाद·; M1–3 श्वर्षिसंवादे श्वसपातनं ( M2 श्वसवादन ) — *Adhy no* ( figures, words or both ) K5 119, B1 106, B3 4 Dn1 115, Da1 Dn2 116, D2 112, D7 S ( G3 missing ) 118, D3 114 — *Śloka no* Da 23½, Dn 24 ]

22 Before 22, Ś1 K2 4 5 V1 B Da Dn D2–7 T G1 4 M ins भीष्म उवाच ( T2 श्री° ) — ᵃ ) T2 व्याघ्र K3 5 V1 B D ( except D1 ) S ( G3 missing ) च ( for तु ) Bo 5 मध्यस्थस्, T2 मूलस्थं ( for मूलस्थस् ) — ᵇ ) T2 तृप्तं ( for तृप्त· ) D2 3 तृप्तो ( for सुप्तो ) M4 गतैर् ( for हतैर् ) K5 Bo. 1 3–5 Dn1 D2 3 6. 8 transp हतै· and मृगै· D5 स्वस्तसुप्तो मृग हतैः ( corrupt ) — ᶜ ) K5 V1 B Da Dn D2. 3 गजश्चा( Bo Da D2 °श्चा )गात्; D5 गजैश्चागात्; D6 राजश्चागात्; D3 गजश्चांगां ( sic ), G1 नागाश्चागान् ( for नागश्चागात् ). D4 नागश्चागतमुद्दश ( sic ). — ᵈ ) D1 सत्तो ( for मत्तो ) Da मत्त ( for मेघ ) M1 मत्तो मेघजवोत्थित·

23 ᵃ ) G1 प्रभिन्न Ś1 ·करटि, K1 D1 ·करटि. K1 M1 प्रांशु·, Dn2 प्राशु·, G1 प्राशु ( for प्रांशु· ). — ᵇ ) Da पद्मां; D7 S ( G3 missing ) पद्मैर् Ś1 K1 विनत· ( for वितत ). Dn ·कुंभक· ( for ·मस्तक· ). — ᶜ ) K1 स्वविश्वाणो; D1 सुविशाणो, M1 3 सविषाणो ( for सु° ). D4 महाकारो — ᵈ ) K B1 2 4 Da Dn1 D1 3–5. 7 8 T G1 2 4 M2 ·निःस्वन

24 ᵃ ) K1 स ( for तं ). — ᵇ ) D4 om from मद गर्वित up to त ( in 25ᵇ ) K5 D2 3 5 6 8 बलदर्पित; V1 B1–4 Da Dn बलगर्वितं, Bo 5 बलवत्तरं ( for मदगर्वितम् ) — ᶜ ) D6 हस्ते, G4 दति ( for हस्ति ). V1 Da हस्तिभयस्त्रस्तस्; B1 °भयात्तत्र, B2 D3 G3 M °भयत्रस्त, T1 दतिभयात्रस्त ( for हस्ति° ) — ᵈ ) B4 D7 T1 G2 4 आययौ ( hypermetric ) ( for ययौ )

25 D4 om up to तं ( of v l 24 ) — ᵃ ) B1 तदा ( for ततो ) K5 Dn कुंजरत्व — ᵇ ) K5 Dn T2 transp तं and व्याघ्रम् D1 ते ( for तं ). D6 ऋषिसत्तम — ᶜ ) V1 B Da Dn D2 3 5 6 8 ·मेघनिभं ( for मेघोपमं ) K5 महामेघसम चैव; D1 महामेघो पसदृष्ट्वा ( sic ). — ᵈ ) K5 दृष्ट्वा भीतो, Dn1 स भीतो हि; M4 तं सभीतो K1 गण·; D4 तदा ( for गज· )

26 ᵃ ) K1 सकल; V1 शकल; Bo समल, D1 कामल· ( for कमल· ) K3 V1 Da2 Dn D2 4 6 8 ·खंडानि, G2 ·कंडानि ( for ·षण्डानि ) — ᵇ ) Ś1 K1–4 B2 Da D1 7 T G1. 2 4 M2–4 सल्लकी; D8 शल्लकीं ( for शल्लकी· ) — ᶜ ) D1 मदा ( for मुदा ). M4 युक्तं — ᵈ ) K3 D4 पद्मखंड; D6 °रेणुं ( for °रेणु· ).

27 ᵃ ) M4 तथा तु ( for कदाचिद् ). K2. 3 Da Dn

अथाजगाम तं देशं केसरी केसरारुणः ।
गिरिकन्दरजो भीमः सिंहो नागकुलान्तकः ॥ २८
तं दृष्ट्वा सिंहमायान्तं नागः सिंहभयाकुलः ।
ऋषिं शरणमापेदे वेपमानो भयातुरः ॥ २९
ततः स सिंहतां नीतो नागेन्द्रो मुनिना तदा ।
वन्यं नागणयत्सिंहं तुल्यजातिसमन्वयात् ॥ ३०
दृष्ट्वा च सोऽनशत्सिंहो वन्यो भीसन्नवाग्बलः ।
स चाश्रमेऽवसत्सिंहस्तस्मिन्नेव वने सुखी ॥ ३१
न त्वन्ये क्षुद्रपशवस्तपोवननिवासिनः ।
व्यदृश्यन्त भयत्रस्ता जीविताकाङ्क्षिणः सदा ॥ ३२
कदाचित्कालयोगेन सर्वप्राणिविहिंसकः ।
बलवान्क्षतजाहारो नानासत्त्वभयंकरः ॥ ३३
अष्टपादूर्ध्वचरणः शरभो वनगोचरः ।
तं सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशनम् ॥ ३४
तं मुनिः शरभं चक्रे बलोत्कटमरिंदम ।
ततः स शरभो वन्यो मुनेः शरभमग्रतः ।

C. 12 4232
B 12 117 14
K. 12 117 15

---

D1.4 भ्रम( D1 रम )माणन्य — [b]) K1 D4 M4 समुत्त, K2 Da Dn1 समुत्त; K4 Dn2 D1.7 T M2 सुसुन्त, K5 स्वमुत्तं; B1.4 D2 3 5 6 स्वसुप्त; G1.2 4 सुखदं (for सुसुप्त) K2 सदा (for तदा) — [c]) D8 [ट]ऽरस्त्यस्य; D8 °टजस्त्स्य — [d]) D7 T G1.2.4 M दिवानिश (for निशा°) K3 कालोगच्छत सोनिश ॐ C3 b n° निशानिश बदुराश्रम् । ॐ

28 [b]) Da केशरारुण K5 केशरी केशरान्वित°, B0 2-5 D2.5 6 8 के( D5 om के )शरी केशरा( D5 °शा )रुण° — [d]) D1 सिंह (for सिंहो)

29 [b]) K2.5 V1 B D (except D1) T1 G2 4 M भयार्दित°, T2 G1 -भयात्तत° (for °कुल°)

30 [a]) D4 om. स K5 स चैव, Dn स तत° (by transp ) D1 सिंहतो नाम (for सिंहता नीतो) M2 यातो (for नीतो) — [b]) D4 नागेंद्रे, D7 T1 G1.4 M गजेंद्रो K4 तत° (for तदा) — [c]) S (except T2, G3 missing ) तं च (for वन्य ) K1 D4 नागणयन्, K4 नागं नयत्, D1 नागणयात् D7 T G1.2 4 सिंहम् — [d]) K2 Dn2 D1.4 तुल्यजाति K4 D4 -समन्वियात्

31 [a]) K1 (marg ) स दृष्ट्वा, D2 8 तं दृष्ट्वा, D5 दृष्ट्वा वा K1.4 [ऽ]नम( K4 °य )त्, K1 m. 3 5 V1 B Da Dn D2 3 5 6 8 [ऽ]भवत् (for ऽनशत्) K4 सिंहं — [b]) D7 भिसन्न-; G1 हि सन्न Ś1 K2 D1 वन्यो भीमाद्( Ś1 °न )वाचलत् ( D1 °लं ), K1 m 5 V1 B Da Dn D2 3.5 6 8 वन्यो भयसमन्वित°, K4 वन्यो भीमो यत्राचलन् (sic), text as in K3 D4 T2 G2 4 M. — [c]) D2 वाश्रमे K1 D4.8 वसन् K5 सिंहे, D6 सिंहं — [d]) K1.3 वने सुख ( K1 also °ख ), K5 V1 B1-2 5 Da Dn1 D2 3 5 6 8 महावने, B0 महामुने, B4 मुनेर्वने; Dn2 वराश्रमे (for वने सुखी ).

32 [a]) K3 D4 ततोन्ये, T2 G1 2 M न चान्ये (for न त्वन्ये) V1 B1 5 Da Dn तद्भयात्पशवो नान्ये — [b]) D8 ततो वन (for तपोवन- ) K3 V1 B1 2 Da Dn D4.- S (G3 missing) समीपस्त° (for -निवासिन°) — [c]) K1 व्यतिष्ठत, K6 B2-5 D2 3 5 6 8 अदृश्यंत; D7 T1 G1.2 प्राद° (for व्यद°) B2 D7 T2 G1 भयाघ्रस्ता, B5 T1 G4 भयात्तत्र, Dn2 तदा त्रस्ता (for भयत्रस्ता) — [d]) V1 B0-2 5 Da D7 T1 G4 तदा; B3 4 Dn1 D2 5 तथा (for सदा)

33 [b]) K4 सर्वप्राण , D1 °प्राणा-; M4 °प्राणी (for °प्राणि )

34 [a]) K3 5 V1 B Da Dn D2-6 8 T G1.2.4 -नयन° (for -चरण° ) K1 अभ्ययादूर्ध्वचरण ; D1 अष्टपदुर्ध्वचरण°; M अष्टपादोर्ध्वनयन° — [b]) K4 शरभौ; D4 सरभो (for शरभो) — [c]) T2 M1.3.4 स (for त) K4 हर्तुम् (for हन्तुम् ) T2 अन्विच्छन् (for आगच्छन् ) D7 G1.4 सिंह मंहर्तुमागच्छन्, T1 सिंहं स हतुमा° — [d]) V1 मस्य (for तस्य) D7 S (G3 missing) निवेशने — After 34, D7 S (G3 missing) ins

272* त दृष्ट्वा शरभं यान्त सिंह परभयातुर ।
ऋषिं शरणमापेदे वेपमान कृताञ्जलि ।

35 [a]) D1 शदर्भं; D4 सरभं (for शरभ) G1 त मुनिं शरभश्चेति — [b]) D1 om बलो K4 B2 D4 अरिंदम ( B2 °मं ), D1 अरिर्दम — [f]) D1 द्रुतां, D5 द्रुत K1 D3 4.6 M4 स प्रा( M4 सप्र )द्रवद् (for सप्रा°) K1 3 5 V1 B Da2 Dn D2-4.6 8 वनात्; Da1 द्रुमात्, D7 T G1.2.4 M वन (for भयात्) D5 हतसप्राद्रवद्वनात्

36 [a]) D7 S (G3 missing ) transp स and एष K3 D6 एव, Da एप (for एत्र) D5 शरभ (for

C 12 4293
B 12 117 15
K 12 117 13

दृष्ट्वा बलिनमत्युग्रं द्रुतं संप्राद्रवद्भयात् ॥ ३५
स एवं शरभस्थाने न्यस्तो वै मुनिना तदा ।
मुनेः पार्श्वगतो नित्यं शारभ्यं सुखमाप्तवान् ॥ ३६
ततः शरभसंत्रस्ताः सर्वे मृगगणा वनात् ।
दिशः संप्राद्रवन्राजन्भयाज्जीवितकाङ्क्षिणः ॥ ३७
शरभोऽप्यतिसंहृष्टो नित्यं प्राणिवधे रतः ।
फलमूलाशनं शान्तं नैच्छत्स पिशिताशनः ॥ ३८
ततो रुधिरतर्षेण बलिना शरभोऽन्वितः ।
इयेष तं मुनिं हन्तुमकृतज्ञः श्वयोनिजः ॥ ३९
ततस्तेन तपःशक्त्या विदितो ज्ञानचक्षुषा ।
विज्ञाय च महाप्राज्ञो मुनिः श्वानं तमुक्तवान् ॥ ४०
श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः ।

शरभ ) — b ) Ś1 K1.4 D1 G2 व्यस्तो, T2 न्यस्ता (for न्यस्तो ). D1 च (for वै ) K5 V1 Bo. 2-5 Da Dn D2, 3, 5 6 सन्यस्तो; B1 मन्यतो ; D8 स न्यस्तो ( for न्यस्तो वै ). — c ) B1 मुनि . K4 D1 पार्श्वे( D1 °श्व ) रविद्; D4 पार्श्वगता, D6 पार्श्वे गतो ( for पार्श्वगतो ) — d ) K2 4 शारभ्यां; K8 शारभ्या; V1 B Da Dn D1-3 5-8 T G1, 2 4 शरभ , M1-3 शार( M1 °रा ) भ्यात् ( for शारभ्य ). K5 शरभ सुखमावसत्; D4 सार भ्यात्सुखमाप्नुयात्; M4 शारभात्सु*माप्तवान्.

37 a ) D2 3 6 ततस्तं शरभं दृष्ट्वा, D4 तत सरभस त्रासात्; D7 T1 G4 ततस्तु शरभात्र( G4 °भत्र )स्तां — b ) K2, 3 5 B Da Dn D2, 3, 5, 6, 8 सदा, T2 वने ( for वनात् ). V1 D4 सर्वे मुनिगणास्तदा ( D4 °णा वने ). — c ) V1 समाप्राद्रवन्; Da D6 M4 संप्रद्रवद् ( for संप्राद्रवन् ).

38 a ) D4 सरभो K3 B1 2 Da S ( G3 missing ) संतुष्टो; K5 Bo 3-5 Dn D2 3, 5 6 8 संहृष्टो ( for सहृष्टो ). V1 शरभोप्यतिश तुष्टो — b ) Da विहिंसक ( for वधे रतः ). — c ) K3 Dn D4 कर्तुं; D7 S ( G3 missing ) दांतं ( for शान्तं ) K4 फलमूलाशनोशांता (sic), K5 V1 B D2 3 5, 6 8 फलमूलाशनान्हंतुम्; Da °शनाद्धंतुम् — d ) K5 V1 B Da D2 3 5 6 8 ऐच्छत् ( for नैच्छत् ) Bo पिशितासन

39 a ) Ś1 K V1 D4 8 रु( K1 रु on marg )धिर षर्पेण, B1 °दर्पेण; D1 दधिरवर्षेण. D7 S ( G3 missing ) तत क्षुद्रसमाचारो — b ) Da बलवान् ( for बलिना ) Ś1 K1-4 D1 बलिना स सम( D1 सुसम ) न्वित ; K5 D6 भूरिणा ( D6 बलिना ) शरभोक्षित , D4 बलेनातिसमन्वित., D7 S ( G3 missing ) बलेन च ( M2 .°ले च न ) सम°. — c ) K8 om ( hapl ) from नि up to मु ( in 40[d] ). — d ) D1 न कृतज्ञ ( for अकृतज्ञः ). Bo. 5 श्व( B5 स्व )योनिषु; D4 स्वयोनिजः; D6, 8 च योनिज°; D7 T1 G2 4 M2 [अ]कृतान्वय°; T2 शुभोन्वय°; M1, 3, 4 कृतान्वयः ( for श्वयोनिज° ). —After 39, D7 S ( G3 missing ) ins. :

273* चिन्तयामास च तदा शरभ श्वानपूर्वक ।
अस्य प्रभावात्संप्राप्तो वाक्यमात्रेण तु केवलम् ।
शरभत्व सुदुष्प्राप सर्वभूतभयंकरम् ।
अन्येऽप्यत्र भयत्रस्ता सन्ति सत्त्वा भयार्दिता ।
मुनिमाश्रित्य जीवन्तो मृगा पक्षिगणास्तथा । [5]
तेषामपि कदाचिच्च शरभत्वं प्रयच्छति ।
सर्वसत्त्वोत्तम लोके बलं यत्र प्रतिष्ठितम् ।
पक्षिणामप्ययं दद्यात्कदाचिद्गारुडं बलम् ।
यावदन्यत्र सप्रीत कारुण्यं तु समाश्रित ।
न ददाति बल तुष्ट सत्त्वस्यान्यस्य कस्यचित् । [10]
तावदेनमहं विप्रं वधिष्यामि च शीघ्रत ।
स्थातुं मया शक्यमिह मुनिघातान्न संशय ।

[ ( L. 1 ) T2 G1, 2 श्वानपूर्वक; M2 शुनिपूर्वक. — ( L 2 ) T2 G1 अपि ( for अस्य ). T2 G1 [प]व ( for तु ). — ( L 4 ) D7 स्वभ्या, T1 G4 इति- ( for सत्त्वा ). — ( L. 5 ) G2 तदा ( for तथा ) — ( L. 7 ) G1 M1 लोको ( for लोके ). — ( L. 9 ) G2 यावदन्यस्य. D7 T1 G4 च ( for तु ). — ( L 11 ) T2 G1 2 विप्र; M क्षिप्र ( for विप्र ) ]

40 K8 om up to मु ( cf v l. 39 ). — a ) D1 तपस्विनातः शक्त्या ( submetric ) — b ) G2 विज्ञातो ( for विदितो ). — c ) Dn D8 स ( for च ). B1 महाप्रज्ञो; T2 G1 मुनि. प्राज्ञ . — d ) K1 D4 तदुक्तवान्, K5 D2 3, 5 6 8 तमब्रवीत् ( for तमुक्तवान् ). D1 मुनिं स्वानं सतुक्तवान् (sic), D7 S ( G3 missing ) शुनि ( T2 G1 तत ) शाप प्रयुक्तवान् — After 40, D7 S ( G3 missing ) ins. :

374* मुनिरुवाच ।
अहमग्निप्रभो नाम मुनिर्भृगुकुलान्वय ।
मनसा निर्दहे सर्वं जगत्संधारयामि च ।
मम वश्यं जगत्सर्वं देवान्वर्ज्य चराचरम् ।
सन्ति देवाश्च मे भीता स्वधर्मं न त्यजन्ति ये ।
स्वधर्माच्चलितान्सर्वान्वाक्यमात्रेणैव निर्दहे । [5]

व्याघ्रो नागो मदपटुर्नागः सिंहत्वमाप्तवान् ॥ ४१
सिंहोऽतिबलसंयुक्तो भूयः शरभतां गतः ।
मया स्नेहपरीतेन न विसृष्टः कुलान्वयः ॥ ४२
यस्मादेवमपापं मां पाप हिंसितुमिच्छसि ।
तस्मात्स्वयोनिमापन्नः श्वैव त्वं हि भविष्यसि ॥ ४३
ततो मुनिजनद्वेषाद्दुष्टात्मा श्वाकृतोऽबुधः ।
ऋषिणा शरभः शप्तः स्वं रूपं पुनराप्तवान् ॥ ४४

C 12 4302
B 12.117 23
K 12.117 34

इति श्रीमहाभारते शान्तिपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

---

किमद्य त्व मया नीत शरभत्वमनामयम् ।
क्रूर स सर्वभूतेषु हीनश्चाशुचिरेव च ।

[G1 om. the ref D7 M ऋषिर् (for मुनिर्) — (L 2) D7 T1 G2 4 M1 3 4 निर्दयेत्सर्वं, G1 निर्दहेय च — (L 3) G2 देवा यच्च (for देवान्वर्ज्य) — (L 4) T2 G1 ये (for मे) M2 ते (for ये) — (L 5) T1 G2 4 व्यावितान् D7 T G1. 2 4 [अ]पि (for [प्]व) T2 G1. 2 निर्दहेद — (L 7) T2 तत्त्वेषु (for भूतेषु) M1. 2. 4 वधु (M4 °कि)र सर्वसत्त्वेषु (for the prior half) T2 स (for the second च) ]

41 Before 41, Bo 4 5 ins मुनिरुवाच — a) Dn2 श्वत्वं; D1 श्वाश्चा, D4 श्वाश्च, T2 श्वा तु, G2 श्वत्वाद् (for श्वा त्व) K4 द्वीपत्वम्, D1 द्वीपितम् (for द्वीपित्वम्) D2 om पश्चो — K3 om. (hapl) 41c–42b K1 reads 41cd twice V1 reads 41e–42b on marg — e) Dn व्याघ्रान् (for व्याघ्रो) D1 नाम (for नागो) K1 D1 मदपटुन्, D7 T1 G1. 4 °परो (for °पटुर्) V1 B2 व्याघ्रो नागत्वमापन्नो (B2 °मगमो) — d) K1. 6 V1 B Da Dn D2 3 5–8 S (G3 missing) भागत (for भाप्तवान्). D1 repeats सिंहत्वमाप्तवान्

42 K3 om. 42ab (cf v l. 41) V1 reads 42ab on marg — a) K6 बलमापन्नो; V1 B Da D2–6 8 °संपन्नो (for °संयुक्तो) Dn सिंहत्व (Dn1 °त्व) बलमापन्नो — b) K1 (marg) पुन (for भूय) D4 सरभत्तां D7 S (G3 missing) शरभतामियात् (D7 T1 G2 °मया; M °मिया) — c) D2 स्नेहत्यमीतिन (sic), G1 [स्न]द्विपपरीतेन (for स्नेह°) — d) T2 om. न Ś1 K1–4 V1 B5 Da न विसृष्ट, K6 Bo 4 Dn D2 3 5 6 8 विसृष्टो न (Bo °ष्टो न), D7 M2 विसृष्टो (M2 °ष्ट) न (by transp) K6 कुलात्तु य, V1 °न्वित (for °न्वय) B3 D4 G1 विसृ (G1 °द्वि)ष्ट कुशला (D4 °लजा)न्वय, D1 विसृष्ट कुलाम्ब य (sic)

43 a) Dn2 तस्माद् (for य°) K1 (marg) कृतं मां तु, D7 T G2 4 M महापाप (G2 °प) (for अपाप मां) G1 तस्मादेव महापाप — b) D7 T G2 4 M2 मा त्व, M1. 3 4 मा त्वं (for पाप) K1 3 इच्छति, K6 D2 3 5 6 8 अर्हसि (for इच्छसि) — Bo om (hapl) 43cd — c) K1 T G2 4 M1 3 4 त्वां; V1 B1 2 5 Da श्व; B3 सु-, M2 स्व (for त्व) D4 -योनिसपन्न — d) T2 पुन श्वैव, M1–3 पुन श्वानो (for श्वैव त्व हि) D1 6 भविष्यति (for °ष्यसि) — After 43, T2 ins

275* श्वा पूर्वं द्वीप्यसि व्याघ्र गज सिंहस्तथाश्व[ष्ट]पात् ।
निजेन च स्वभावेन पुन श्वानो भविष्यसि ।

44 a) M1 om जन K1 3 5 V1 B Dn D2 3 5 6 8 T2 G2 M2 4 -द्वेष्टा; K4 Da द्वेषा (for -द्वेषाद्) — b) M1. 3 4 दुरात्मा (for दुष्टात्मा) K3 5 V1 B Da Dn D2–6 8 T2 M प्राकृतो (for श्वाकृतो) D7 T1 G1 2 4 दुरात्मा प्राकृतोधम — c) D2. 4 सरभ (for शरभ) K4 D1 4. 8 G1 सप्त (for शप्त) — d) K1 6 B2 m 4. 5 D1. 4 6 T1 G1. 4 M4 स्वरूप; K2 3 V1 B1 2 Da Dn सद्रूप; Bo 3 D2 3 8 M1–3 श्वरूपं (for स्व रूपं) D7 T G1 2 4 M1 3 4 आगमत्, M2 आगत (for आप्तवान्)

Colophon G3 missing — *Sub-parvan* Ś1 K V1 B Da Dn D1–7 T G1. 2 4 M राजधर्म — *Adhy name* Ś1 K V1 B Da Dn1 D1–6 ऋषिसंवाद, D7 T1 G2 4 ऋषिशाप; M1–3 ऋषिसंवादे पुन श्वत्वापादन (M2 °श्वापादन) — *Adhy no* (figures, words or both) K4 D2 113, B1 107, B3 Dn1 116, Da1 Dn2 117 (as in text), D7 S (G3 missing) 119, D3 115 — *Śloka no* Dn1 24, Dn2 23, D2 113 (?)

# ११८

C 12 4303
B 12 118 1
K 12 118 1

भीष्म उवाच ।

स श्वा प्रकृतिमापन्नः परं दैन्यमुपागमत् ।
ऋषिणा हुंकृतः पापस्तपोवनबहिष्कृतः ॥ १
एवं राज्ञा मतिमता विदित्वा शीलशौचताम् ।
आर्जवं प्रकृतिं सत्त्वं कुलं वृत्तं श्रुतं दमम् ॥ २
अनुक्रोशं बलं वीर्यं भावं संप्रशमं क्षमाम् ।
भृत्या ये यत्र योग्याः स्युस्तत्र स्थाप्याः सुशिक्षिताः ३
नापरीक्ष्य महीपालः प्रकर्तुं भृत्यमर्हति ।
अकुलीननराकीर्णो न राजा सुखमेधते ॥ ४
कुलजः प्रकृतो राज्ञा तत्कुलीनतया सदा ।
न पापे कुरुते बुद्धिं निन्द्यमानोऽप्यनागसि ॥ ५
अकुलीनस्तु पुरुषः प्रकृतः साधुसंक्षयात् ।
दुर्लभैश्वर्यतां प्राप्तो निन्दितः शत्रुतां व्रजेत् ॥ ६
कुलीनं शिक्षितं प्राज्ञं ज्ञानविज्ञानकोविदम् ।

## 118

☞ G3 is missing for this adhy (cf v l 12 112 1)

1 D8 om the ref — a) T2 श्वा तु (for स श्वा) — b) D4 परं, D8 पुन (for परं) K3-5 B0 3-5 Da Dn D2 3 5 6 8 उपागत (for °गमत्) — c) K5 धिकृत (for हुकृत) — d) D8 ततो वन, T2 G1 सत साधु (for तपोवन) D4 तपोबलविगर्हित

2 a) Dn2 राजा, T2 ज्ञात्वा, G1 राज्ञां (for राज्ञा) D1 मतिमत, G1 °मतां (for °मता) — b) G1 विधित्वा K5 V1 B Da Dn D2 3 5 6 8 सत्य शौचता (D8 °त); T2 G1 शौचशीलतां (for शील शौचताम्) — c) D4 प्रकृति- B1 सर्वं, Da सर्वं; Dn सत्य (for सत्त्व) — d) K1. 3 5 V1 B Da Dn D2 3 5 6 8 transp कुल and श्रुत G2 कुल (for कुलं). M1 वृत्त (for वृत्तं)

3 a) K1 V1 आनुक्रोश; K4 D1 अनुक्रोध (D1 °ध) (for °क्रोशं) K5 दयां शौच, B1 Da बल सत्त्वं (for बल वीर्यं) — b) K2 3 V1 B Dn D2 3 5-8 S (G3 missing) प्रभावं प्रशमं (Dn °श्रय) क्षमां (D8 G2 °मं), K5 बल च प्रशमं क्षम; Da भाव सप्रशमं क्षमा, D4 भावसप्रशय क्षमां — c) Da तुल्या (for भृत्या) Da1 D6 योगा, Da2 योगां (for योग्या) D7 S (G3 missing) भृ(M4 वृ)त्या ये मन्त्रिणो योग्या — d) D4 om (hapl) from सुशिक्षिता up to राजा (in 4d) K2 3 5 V1 B Da Dn D2 3 5 6 8 सुरक्षिता (for सुशि°) D7 S (G3 missing) स्थाप्या स्यु सुपरी(G1 M1 2 °रि)क्षिता

4 D4 om up to राजा (cf v l 3) — a) K3 महीपाला; G2 °पाल (for °पाल). — b) G2 प्रवर्तुं (for प्रकर्तुं) K1 भृतिम् (for भृत्यम्). K3 भृत मर्हसि K1 m 5 V1 B Da Dn D2 3 5 6 8 सचिवं कर्तुमर्हति. — c) D6 8 अकुलीमं (D8 °लीन). D7 S (G3 missing) जनाकीर्णो (for -नरा°). K4 अकुली नरकाकीर्णो (sic) — d) Da1 om सुख

5 a) K5 D7 T1 G2 4 कुलीन, M कुलज (for °ज). K4 5 V1 B1 4 Da Dn D1-3 T1 G4 प्राकृतो Dn2 D8 M राजा, D7 G2 राजस् (for राज्ञा) T2 G1 कुलजप्रकृती राजा — b) K3 D4 न; K5 B0 4 5 Dn D3 5 T1 G4 स्व, M2 ता (for तत्) D4 तथा; T2 सह (for सदा) — c) D1 पापी — d) K1 निर्म्यमानो (sic), K2-4 V1 B Da Dn D1-3 5 6 8 भि(D1 om भि)द्यमानो; K5 [अ]प्रिय (for निन्द्य) D7 S (G3 missing) निंद(T1 निंद्य, M विंद)मानोऽप्यनागम

6 a) K3 च (for तु) M2 पुरुषं — b) K2-5 V1 B D (except D1) S (except G1, G3 missing) प्राकृत K1 सक्षय, K3 5 V1 B0 2-5 Da2 Dn D2 3 5. 6 8 -संश्रयात् (for सक्ष°). — c) K1 दुर्लभैस मतां (sic), D6 °श्वर्यता (for °श्वर्यतां) — d) K1 निर्मित; D1 निर्दित (for निन्दित) — After 12. 118 6, D7 S (G3 missing) ins a passage (given in App I No 12)

7 a) D1 प्राज्ञ — b) K5 V1 B Da Dn D2 3 5. 6 8 -पारग (for -कोविदम्) — K5 D8 om. (hapl.) 7d-9a. — d) D2 3 5 सहज; D7 T1 G3. 4 तेजन, D8 देवज, G1 देशजस् (for देशजं)

C 12. 4316
B 12. 118. 14
K 12. 118. 25

धीरं श्लक्ष्णं महर्द्धिं च देशकालोपपादकम् ॥ १४
सचिवं यः प्रकुरुते न चैनमवमन्यते ।
तस्य विस्तीर्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥ १५
एतैरेव गुणैर्युक्तो राजा शास्त्रविशारदः ।
एष्टव्यो धर्मपरमः प्रजापालनतत्परः ॥ १६
धीरो मर्षी शुचिः शीघ्रः काले पुरुषकारवित् ।
शुश्रूषुः श्रुतवाञ्श्रोता ऊहापोहविशारदः ॥ १७
मेधावी धारणायुक्तो यथान्यायोपपादकः ।
दान्तः सदा प्रियाभाषी क्षमावांश्च विपर्यये ॥ १८
दानाच्छेदे स्वयंकारी सुद्वारः सुखदर्शनः ।
आर्तहस्तप्रदो नित्यमाप्तंमन्यो नये रतः ॥ १९
नाहंवादी न निर्द्वंद्वो न यत्किंचनकारकः ।
कृते कर्मण्यमोघानां कर्ता भृत्यजनप्रियः ॥ २०
संगृहीतजनोऽस्तब्धः प्रसन्नवदनः सदा ।
दाता भृत्यजनावेक्षी न क्रोधी सुमहामनाः ॥ २१
युक्तदण्डो न निर्दण्डो धर्मकार्यानुशासकः ।

---

(for च) — c) K3 Dn D4 शूर; D8 श्लक्ष्ण (for श्लक्ष्णं) K1 महर्षिं च, Da महद्व (Da2 °र्द्धिं) च, D7 T G2 4 M2 4 महर्धीकं (for महर्द्धिं च) G1 M1 8 वीरं (M1 8 धीरं) श्लक्ष्णमहर्धीकं — d) Da कारक, D1 पापद (for पादकम्)

15 b) K1 चैदम्, Da1 D4 T2 G3 चैवम्, G1 नैनम् (for चैनम्) — c) D2 3 5 6 राष्ट्रं, G2 राज्ये (for राज्यं) D3 तस्य विस्तार्यते राष्ट्र° — d) Dn2 G1 गृहपतेर्

16 Da2 om 16 — a) K1 गुणै — b) Dn2 D4 M1, 8 राज (for राजा)

17 a) Da धीर°, G1 वीरो (for धीरो). K6 मनीषी (hypermetric), D8 मर्षि (for मर्षी) K2 5 V1 B Da Dn D2 3 5 6 8 तीक्ष्ण°, D7 T2 दीर्घ° (for शीघ्र°) — b) D2 कालं (for काले) K3 Dn काल-वित्, M3 °कारवान् (for °वित्) — c) M1 8 श्रुत वान् M3 ज्ञाता (for श्रोता) — d) K5 V1 Bo 1 4 D2 3, 6, 8 व्यूहापोह (for ऊहापोह°)

18 a) K5 om. from मेधावी up to सुद्वारः (in 19b) K2 दारुणा, K4 दारणा°, D1 करणा (for धारणा°) — b) Bo. 3-5 D2 3 5 6 8 यथायुक्तोप° (for °न्यायोप°) M3 वादकः (for °पादकः) — c) B2 Da सदा दांत (Da1 °तं) (by transp) K1 M2 प्रिय भापी, K3 प्रियभाये (sic) — d) B1 क्षमायाश्च (for °वांश्च) ❀ Cn विपर्यये अक्षमावति । ❀

19 K5 om up to सुद्वार (of v 1 18) — a) B3 4 D3 5 दानच्छेदे; D7 S (G3 missing) नाति-च्छेत्ता (M1, 8 °द्य; M3 4 °द्य) (for दानाच्छेदे) — b) S1 सद्वार°; K1 4 सुदा(K4 °द्वा)रः, K3 B1, 2 Da Dn श्रद्धालु°, D4 सुधार, D7 G1 2 सुस्वादु, T1 G4 सस्वादु, T2 स्वाद्गुर° (for सुद्वार°) Bo 3-5 D2, 3 5 6 8 साध्वाचार सुदर्शन — V1 reads 19c–21d on marg — c) B2 m 5 (marg as in text) आर्द्र (for आर्त°) — d) K1 आप्तमन्यो, K4 5 V1 Bo-4 Da D2 3 5-7 T G2 4 M1 2 आप्तामात्यो, B5 आप्त माप्तो (for आप्तमन्यो). K3 अमात्यप्रिये रतः (sub-metric), Dn अमात्यो हि हिते रत, D3 आप्तामाप्तो रतो रत° (sic).

20 V1 reads 20 on marg. — a) D4 च (for न). — b) K1 य; M2 च (for यत्) — c) D4 क्षते; M4 कृत (for कृते) B3 m 3 4 Dn D2, 3 5 6 8 [अ]मात्यानां; D1 (also as in text) [अ]योगानां (for [अ]मोघानां) — d) Dn G2 भक्त, M3 गृह (for भृत्य).

21 V1 reads 21 on marg — a) G1 [S]स्तब्ध° (for Sस्तब्ध°) K1 सुसंगृहस्तनोस्तब्ध° (sic). — b) V1 तथा; Da1 तदा (for सदा) D6 धर्मार्थकुशल° सदा — c) K3 4 D1 दृढ°, K5 V1 B Da Dn D2 3 5 6 8 सदा, D7 S (G3 missing) त्राता (for दाता) M2 सर्व° (for भृत्य) K2, 3 V1 B3 4 Da Dn D2 S (G3 missing) °जनापेक्षी, D4 °न्वेक्षी (for °वेक्षी) — d) V1 Bo 3-5 Dn1 D2 3 5 6 8 अक्रोधी (for न क्रोधी) D7 S (G3 missing) जितक्रोधो महामना° .

22 a) K4 युक्तदण्डे, D2 युक्त दण्डो G1 युक्तदंभो विनिर्दंभो — b) K5 धर्मकामोनु° (for °कार्यानु ) V1 °साधकः, Bo 3-5 Dn °शासन, Da1 °शासका°, G3 शासक° (for °शासक) — c) B1 चारुनेत्र° V1 कृता वेक्षी, Da च(Da1 प)थावेक्षी, Dn प्रजावेक्षी, D7 T G (G3 missing) M1-3 परापेक्षी, M4 परान्वेषी (for परावेक्षी) D4 चारनेत्रपरावक्षी (sic) — d) D3 धर्मार्थं°. D4 T2 तथा (for सदा).

चारनेत्रः परावेक्षी धर्मार्थकुशलः सदा ॥ २२
राजा गुणशताकीर्ण एष्टव्यस्तादृशो भवेत् ।
योधाश्चैव मनुष्येन्द्र सर्वैर्गुणगणैर्वृताः ॥ २३
अन्वेष्टव्याः सुपुरुषाः सहाया राज्यधारणाः ।
न विमानयितव्याश्च राज्ञा वृद्धिमभीप्सता ॥ २४
योधाः समरशौटीराः कृतज्ञाः शस्त्रकोविदाः ।
धर्मशास्त्रसमायुक्ताः पदातिजनसंयुताः ॥ २५
अर्थमानविवृद्धाश्च रथचर्याविशारदाः ।
इष्वस्त्रकुशला यस्य तस्येयं नृपतेर्मही ॥ २६
सर्वसंग्रहणे युक्तो नृपो भवति यः सदा ।
उत्थानशीलो मित्राढ्यः स राजा राजसत्तमः ॥ २७
शक्या अश्वसहस्रेण वीरारोहेण भारत ।
संगृहीतमनुष्येण कृत्स्ना जेतुं वसुंधरा ॥ २८

C 12 4230
B 12.118 28
K 12 118 46

इति श्रीमहाभारते शान्तिपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

---

23 [a]) $G_2$ $M_3$ राज्ञा (for राजा) $D_7$ $T_1$ $G_{3,4}$ शतगुणाकीर्णं —[b]) $D_5$ पृष्टव्यस; $M_1$ यष्ट° (for एष्ट°) —[c]) $D_1$ योधान्वैव, $D_7$ S ($G_6$ missing) यो($G_1$ $M_{1\,3\,4}$ यौ)धाश्चापि. $K_1$ मनुष्येंद्रा —[d]) K $V_1$ B D (except $D_{1,7}$) $T_2$ $G_1$ सर्वे (for सर्वैर्). $D_8$ गुणैर्; $M_2$ मयैर् (for °गणैर्) $K_{2\,4}$ $D_7$ T $G_{1\,4}$ $M_{1\,3\,4}$ युता, $D_1$ $G_2$ युत°, $D_8$ वृत (for वृता°)

24 [a]) $D_1$ च (for सु°) —[b]) $D_{2\,3\,5,6}$ राज° (for राज्य) $K_1$ °धारिण°, $K_{3\,5}$ $V_1$ B $D_a$ $D_n$ $D_{2,\,3\,5\,6\,8}$ °धारणे; $D_7$ $T_1$ $G_{2,4}$ °कारिण, $T_2$ $G_1$ $M_{1\,3\,4}$ °कारणे; $M_2$ कर्मणि (for °धारणा°) —[c]) $D_{3,5\,6\,8}$ नावि($D_8$ °व)मानयितव्यास् $D_n$ ते (for च) —[d]) $K_4$ $D_2$ बुद्धिम् (for वृद्धिम्). $D_a$ अभी($D_{a1}$ °नी)प्सते, $G_1$ अभीप्सिता (for °प्सता)

25 [a]) $D_1$ योध, $T_2$ $G_2$ $M_{1\,3\,4}$ यौधा° $K_1$ समरशौंटीरा; $K_3$ $D_{n2}$ °शौंडीरा; $K_{4\,5}$ $D_{n1}$ $D_{2-8}$ T G ($G_6$ missing) $M_4$ °शौंडीरा; $M_1$ °शौंडीर्या, $M_3$ °शौंडीर्या (for °शौटीरा°) $M_2$ यौधा° समानशौंडीरा —[b]) $Ś_1$ $K_{2-4}$ $V_1$ B $D_a$ $D_n$ $D_{2,5-8}$ T $G_{1,4}$ $M_2$ शास्त्र° (for शस्त्र). —[c]) $K_3$ $D_1$ धर्मशास्त्रे (for °शास्त्र) —[d]) $K_{3\,5}$ $V_1$ $B_{0\,1\,3\,m,\,5-6}$ D (except $D_1$) S (except $T_2$ $G_1$, $G_6$ missing) °संवृता; $B_2$ सम्भृता (for °संयुता°)

26 [a]) $B_6$ अनुमान (for अर्थमान) $K_3$ निवृद्धाश्च (for विवृद्धाश्च) $D_n$ अभया गजपृष्ठस्था —[b]) $D_a$ रथचार (for °चर्या) $V_1$ $D_{n1}$ °विशारद° —[c]) $K_3$ इष्वस्त्रे (for इष्वस्त्र) $G_1$ यस्या $M_{1\,3}$ कुशलो य स्याद् — $V_1$ reads 26[d]–27[a] on marg —[d]) $D_7$ $T_1$ $G_{3\,4}$ तस्यैव (for तस्येयं) $K_1$ $D_8$ नृपते (for नृपतेर्). — After 26, $D_7$ S ($G_6$ missing) ins:

277* ज्ञातीनामनवज्ञान भृत्येष्वशठता सदा ।
नैपुण्य चार्यचर्यासु यस्यैते तस्य सा मही ।
आलस्य चैव निद्रा च व्यसनान्यतिहास्यता ।
यस्यैतानि न विद्यन्ते तस्येयं सुचिर मही ।
वृद्धसेवी महोत्साहो वर्णानां चैव रक्षिता । [5]
धर्मचर्या सदा यस्य तस्येय सुचिर मही ।
नीतिवर्त्मानुसरणं नित्यमुत्थानमेव च ।
रिपूणामनवज्ञान तस्येय सुचिर मही ।
उत्थान चैव दैव च तयोर्नानात्वमेव च ।
मनुना वर्णित पूर्व वक्ष्ये शृणु तदेव हि । [10]
उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत ।
नयानयविधानज्ञ सदा भव कुरूद्वह ।
दुर्हृदां छिद्रदर्शी यः सुहृदामुपकारवान् ।
विशेषविच्च भृत्याना स राज्यफलमश्नुते ।

[(L 2) $D_7$ $T_1$ $G_4$ नैपुण. $M_4$ चार्नचर्यासु. $T_2$ $G_{1\,2}$ यस्यैनत (for यस्यैते) —(L 3) $G_2$ आकुल (for आलस्य) $G_1$ $M_2$ [अ]तिहास्मता (for °हास्यता) —(L 6) $D_7$ $T_1$ $G_4$ धर्मचर्या —(L 7) $T_2$ $G_{1,2}$ नीतिवर्त्मानुसारेण (for the prior half) —(L 8) $T_2$ $G_{1\,2}$ $M_2$ सुचिरे —(L 10) $G_{1\,2}$ तद्वैव (for तदेव) —(L 13) $T_2$ $G_{1\,2}$ च (for य)]

27 $V_1$ reads 27[a] on marg —[a]) $B_5$ °सहरणे (for संग्रहणे) —[b]) $D_1$ नृपे $T_2$ $G_1$ सर्वदा (for य° सदा) —[c]) $D_a$ मित्राद्य; $D_7$ $T_1$ $G_{3\,4}$ मंत्राढ्य° (for मित्राढ्य°) —[d]) $D_1$ राज (for राजा) $K_{2\,3}$ $D_1$ $T_2$ $M_3$ °सत्तम (for °सत्तम°).

28 [a]) $Ś_1$ $K_{1,3}$ $T_2$ $G_1$ $M_{2\,4}$ शक्य, $K_{2\,4}$ शक्तो; $K_5$ शक्तया; $D_1$ शक्तौ (for शक्या) $K_{2\,4}$ $D_1$ ह्यश्व;

# ११९

C. 12 4331
B. 12 119 1
K. 12 119 1

भीष्म उवाच ।

एवं शुनासमान्भृत्यान्स्वस्थाने यो नराधिपः ।
नियोजयति कृत्येषु स राज्यफलमश्नुते ॥ १
न श्वा स्वस्थानमुत्क्रम्य प्रमाणमभि सत्कृतः ।
आरोप्यः श्वा स्वकात्स्थानादुत्क्रम्यान्यत्प्रपद्यते ॥ २
स्वजातिकुलसंपन्नाः स्वेषु कर्मस्ववस्थिताः ।
प्रकर्तव्या बुधा भृत्या नास्थाने प्रक्रिया क्षमा ॥ ३
अनुरूपाणि कर्माणि भृत्येभ्यो यः प्रयच्छति ।
स भृत्यगुणसंपन्नं राजा फलमुपाश्नुते ॥ ४
शरभः शरभस्थाने सिंहः सिंह इवोर्जितः ।
व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ॥ ५
कर्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि ।

---

K6 V1 B Da Dn D2-8 S (G3 missing) चाश्व (G1 वाश्व) (for अश्व). —$^{b}$) D5 वीरारोहेन, G1 वरारोहेण (for वीरारोहेण) —After 28$^{ab}$, Da1 reads 12. 119 1$^{b}$ (for the first time), repeating it in its proper place —$^{c}$) K4 समहीत. —$^{d}$) D6 यसं धुरा (sic) Ś1 K1 2 4 Da1 D1 कृत्स्नां जेतु वसुधरां

Colophon: G3 missing —*Sub parvan*. Ś1 K V1 B Dn D1-3, 5 7 T G1 2 4 M राजधर्म —*Adhy. name* K6 V1 B Da D2-6 श्वर्षिसंवाद; D1 ऋषिसंवाद; D7 T1 G2, 4 कुशलगु(G2 °ग)णप्रशंसा, M1-3 श्वर्षिसंवादे यौधलक्षणं —*Adhy no* (figures, words or both) B1 108, B3 4 Dn1 117, Da1 Dn2 118 (as in text), D3 114, D7 S (G3 missing) 120; D8 116 —*Śloka no* Da1 29, Da2 Dn D8 28.

## 119

☞ G3 is missing for this adhy (cf v. l. 12. 112 1)

1 D8 om. the ref, T2 G2 श्रीभीष्म. —$^{a}$) Da1 शुभान्समान्, D7 T G1 गुणयुतान्; G2 M गुणोपमान् (for शुनासमान्) G4 तस्माच्छुगुणमान्भृत्यान् —Da1 reads 1$^{b}$ after 118 28$^{ab}$. —$^{b}$) Ś1 K1 4 B4 D1 श्व(K1 श्वा; B4 स)स्थाने यो; K6 Dn स्वे स्वे स्थाने, V1 B0-3, 5 D2 3 5 6 8 स्वे स्थाने यो (for स्वस्थाने यो) D2 3 5 6 8 महीपतिः; D7 S (G3 missing) नरे(D7 T2 G1 4 जने)श्वर. —$^{c}$) D4 (also as in text) कृतिषु; M4 भृत्येषु (for कृत्येषु) —$^{d}$) Da D3 8 राजा; M2 राष्ट्र (for राज्य).

2 $^{a}$) K6 स्व; D7 G1 4 वा (for श्वा) Ś1 K1 2 4 D1 4 सस्थानम्; V1 B Dn D2 3 6 8 T1 M3, 4 स्व स्थानम् (for स्वस्थानम्) Da न स्वार्थं स्थानमुत्क्रम्य —$^{b}$) K6 V1 B1 प्रमाणयति (for °णमभि) K1 D4 अति; G1 2 अपि (for अभि) D7 S (except G1; G3 missing) सत्कृतं (for सत्कृतः). —K4 repeats 2$^{cd}$ after 3$^{ab}$ —$^{c}$) V1 B3-5 D2 आरोप्य (for आरोप्यः). B1 स्वकस्थानात्. —$^{d}$) B3 यदग्रस्य (for उत्क्रम्य). B0 5 Dn D4 प्रमायति, B1 प्रपद्यत; D3 प्रमोघति (sic) (for प्रपद्यते). K6 स्वपुरस्सेन प्रयोजयेत्; D2 3 8 उत्क्रा(D8 °त्क्र)माद्धुप्रमायति.

3 $^{a}$) K8 सभृत्य (for स्वजाति) K2 3 4 V1 B D (except D1) S (G3 missing) गुण (for कुल) —$^{b}$) D8 स्वे स्वे, M3 येषु (for स्वेषु) B3 स्थानेषु, B5 कर्मणि; T G1 2 4 धर्मेषु (for कर्मसु). K4 Dn सस्थिताः. —After 3$^{ab}$, K4 repeats 2$^{cd}$. —$^{c}$) T2 प्रनर्तव्या (for प्रक°) K3 D4 नृपैर्, D5 गुर्वैर्; G1 2 स्वया; M3 युधा (for बुधा) K1 कृत्या; D7 जात्या (for भृत्या). K4 Dn ह्यमात्यास्तु (K5 °श्च); B3 यथानृत्या (sic) (for बुधा भृत्या) —$^{d}$) K6 स्वस्थाने (for नास्थाने). B0 M3 प्रक्रिया, B3 स्वक्रिया K3 V1 B0-3 D7 T1 G1 4 M1 3 4 क्षमा K6 B3 m 4 5 D2 3 5, 6 8 नास्थानेषु (D2 3 6 नानास्थाने) क्रियाः क्षमा (D2 °मा); T2 G2 स्वस्थाने प्रक्रिया क्षमा. ❀ Ca: प्रक्रिया अधिकारः । ❀

4 K8 om 4$^{a}$-8$^{b}$. —$^{a}$) D7 S (G3 missing) अनुकूलानि (for °रूपाणि). Da1 अनुकर्माणि रूपाणि. —$^{c}$) K6 V1 B Da Dn D2 3 4 6 8 M -संपन्नो (for संपन्नं) —$^{d}$) V1 अवाप्नुते; G1 उपश्नुते (for उपाश्नुते). D4 राज्यस्य फलमश्नुते

5 K8 om 5 (cf. v. l. 4) —$^{a}$) K1 शारभश्च (hypermetric). —$^{b}$) Da2 om सिंह. D7 T G1 2 4 इवोच्छ्रित; M1 3 4 °ज्झित (for °र्जित) —$^{c}$) Ś1 M4 [अ]स्थाप्यो (for स्थाप्यो).

6 K3 om 6 (cf v 1 4). —$^{a}$) T2 सुरूपेषु (for

प्रतिलोमं न भृत्यास्ते स्थाप्याः कर्मफलैषिणा ॥ ६
यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः ।
भृत्यान्स्थापयतेऽबुद्धिर्न स रञ्जयते प्रजाः ॥ ७
न बालिशा न च क्षुद्रा न चाप्रतिमितेन्द्रियाः ।
नाकुलीना नराः पार्श्वे स्थाप्या राज्ञा हितैषिणा ॥ ८
साधवः कुशलाः शूरा ज्ञानवन्तोऽनसूयकाः ।
अक्षुद्राः शुचयो दक्षा नराः स्युः पारिपार्श्वकाः ॥ ९
न्यग्भूतास्तत्पराः क्षान्ताश्चौक्षाः प्रकृतिजाः शुभाः ।
स्वे स्वे स्थानेऽपरिक्रुष्टास्ते स्यू राज्ञो बहिश्चराः ॥ १०
सिंहस्य सततं पार्श्वे सिंह एव जनो भवेत् ।
असिंहः सिंहसहितः सिंहवल्लभते फलम् ॥ ११
यस्तु सिंहः श्वभिः कीर्णः सिंहकर्मफले रतः ।
न स सिंहफलं भोक्तुं शक्तः श्वभिरुपासितः ॥ १२
एवमेतैर्मनुष्येन्द्र शूरैः प्राज्ञैर्बहुश्रुतैः ।
कुलीनैः सह शक्येत कृत्स्नां जेतुं वसुंधराम् ॥ १३
नावैद्यो नानृजुः पार्श्वे नाविद्यो नामहाधनः ।

C. 12 4344
B. 12. 119 14
K 12. 119 14

C.

---

(अ[नुरू) D. कर्मसिद्धामुरूपेषु — b) K1 M2 न्यस्त, K4 5 D. 2 5 6 8 न्यस्त, T2 स्थाप्या, M4 न्यस्ता (for न्यस्या) K Bo 2 4 5 Da Dn Ds D1-2 . 6 8 T1 G4 भृत्यान् (for भृत्या) — c) D2 प्रतिलोम्ये, D1 T G1 4 M2 °लोमा (for °लोम) M1. 2 4 प्रतिलोम्या (M4 °मे) न भृत्या (M4 °त्ये) स्वे — d) G1 om स्थाप्या V1 Bo-2 4 Da Dn2 D2 8 5 6 G2 M3 4 फलैषिण°

7 K2 om 7 (cf v 1 4) — b) D1 प्रतिलोमं, D1 T1 G1 M4 प्रतिलोमान् Ś1 K4 D1 M2 नराधिप — c) D1 T G1. 4 M [ऽ]बुद्धा (for ऽबुद्धिर्) — d) D1 T G1 2 4 transp न and स T2 G1 2 4 M रञ्जयति

8 K2 om 8ab (cf v 1 4) — b) K. V1 B D (except D1) S (G3 missing) नाप्र(G1 °प्र)ज्ञा नाजितेन्द्रिया — c) D1 S (G3 missing) जना (for नरा) B1 Dn मंत्र (for पार्श्वे) — d) D5 प्राप्या (for स्थाप्या) K. V1 B D2 2. 5-8 T1 G2 4 M गुणैषिणा, Da2 फलैषिणा, T2 जयैषिणा (for हितैषिणा) Dn स्थाप्या गुणगणैषिणा (Dn1 °णा)

9 a) K3 B1 2 Da Dn1 T2 G1. 2 M कुलजा (for कुशला) D1 corrupt — b) D1 ज्ञानवतो (for ज्ञान°) — c) M4 अक्षुद्र° G1 अक्षुद्रा स्युर्नरा रा[?] — d) K (except K4) V1 B Da Dn D2 3 5-8 T1 G2 4 स्युर्नरा (by transp), T2 G1 वर्तत Bo 2 4 Da2 D1 पारिपार्श्विका (D1 °र्श्वक°), D4 S (G3 missing) पारिपार्श्वका (T G1 4 M1 3 4 °स), Ca पारिपार्श्वका (as in text)

10 D4 om 10 — a) D1 S (G3 missing) उद्भूतास् (for न्यग्भूतास्) K2 Dn D1 T1 शान्तास्; D1 क्षान्तास्, M1 2 क्षतास् (for क्षान्तास्) — b) Ś1 K1 दक्षा, Ś1 (inf lin) चारा, Dn1 T1 G4 M4 चोक्षा° (for चौक्षा) K3 5 B2 Dn2 D2 3. 5-8 प्रकृतिजैः; Dn1 प्रकृतित (for °जा) G1 शुभै° (for शुभा°). — c) K3 B1. 2 Da Dn1 D1 S (G3 missing) [ऽ]नुपक्रुष्टास्; V1 [ऽ]नुपक्रांतास् (for ऽपरिक्रुष्टास्) K1 Bo 3. 5 D2 3 . 6 8 स्वस्थानानु(D3 °न्यु)पस्(K5 °स्थ)ष्टास्ते, B (marg) स्वे स्वे स्थानेपूपकृष्टास्, Dn2 स्वस्थानानपकृष्टा ये — d) K3 B1 तेस्य (for ते स्यू). K2 राजन्; K5 V1 Bo 2-5 Da Dn1 D2. 5 6 8 राज्ञा (for राज्ञो) D1 बलिश्वरा Dn2 ते शूरा बहिश्वरा (submetric)

11 a) B1 पार्श्वं (for पार्श्वे) — b) Dn एवानुगो (for एव जनो) — c) K2 असिहा (sic), G1 M मसिंह° (for असिंह°) K5 V1 B Da D2 3 5 6 8 असिंह स(D2 2 5 सि)हित सिंहे°, D1 T G2 4 सिंह सिंहेन सहित° — d) D1 S (G3 missing) विंदते (for लभते)

12 b) K2 तर° (for रत) — c) G1 हि (for स) — d) D1 उपास्थित°, D2 उपमित

13 a) K2 च ते; K5 V1 B Da Dn D2 3. 5 6 8 एवन्; D4 भृत्यैर्; M2 एते (for एतैर्) Ś1 K4 D1 मनुष्येंद्र — b) K1 शूर — d) G2 M3 transp कृत्स्ना and जेतु B Da Dn D2 2 5 6 8 कृत्स्ना (Dn. कृत्स्नां; D2 कृष्णा) जेतु वसुधरा, D1 T G1 4 M1. 3 4 जेतु कृत्स्ना वसुधरा

14 a) K4 5 V1 Bo 3 4 Dn D2 3 . 6 3 नाविद्यो, G1 नावैद्ये (for नावैद्यो) D5 नानुज° (for नानृजु). — b) K3 2. 5 V1 Bo 2-4 Da2 Dn D2 3 5-8 T G1 2 4 M1. 2 4 नाप्राज्ञो; D1 नाविद्ये, M2 न प्राज्ञो (for नाविद्यो) B2 नामहाबल°, Dn2 नामहाधना; G1 नाम हायशा (for °धन) Da1 नाम प्राज्ञो महाधना — c)

